# मयमतम्

## प्रथमोऽध्यायः

प्रणम्य शिरसा देवं सर्वज्ञं जगदीश्वरम्
तं पृष्ट्वास्मादलं श्रुत्वा शास्ति शास्त्रं यथाक्रमम् १

तैतिलानां मनुष्याणां वस्त्वादीनां सुखोदयम्
प्राज्ञो मुनिर्मयः कर्ता सर्वेषां वस्तुलक्षणम् २

आदौ वस्तुप्रकारं च भूपरीक्षापरिग्रहम्
मानोपकरणं चैव शङ्कुस्थापनमार्गकम् ३

सपदं सुरविन्यासं बलिकर्मविधिं तथा
ग्रामादीनां च विन्यासं लक्षणं नगरादिषु ४

भूलम्बस्य विधानं च गर्भविन्यासलक्षणम्
उपपीठविधिं चैवाधिष्ठानानां तु लक्षणम् ५

स्तम्भानां लक्षणं चैव प्रस्तारस्य विधिक्रमम्
सन्धिकर्मविधानं च शिखराणां तु लक्षणम् ६

एकभूमिविधानं च द्वितलस्य तु लक्षणम्
त्रितलस्य विधानं च चतुर्भूम्यादिलक्षणम् ७

ससालं परिवाराणां गोपुराणां तु लक्षणम्
मण्डपादिविधिं चैव शालानां चैव लक्षणम् ८

गृहविन्यासमार्गं च गृहवेशनमेव च
राजवेश्मविधानं च द्वारविन्यासलक्षणम् ९

यानानां शयनानां च लक्षणं लिङ्गलक्षणम्

पीठस्य लक्षणं सम्यगनुकर्मविधिं तथा १०

प्रतिमालक्षणं देवदेवीनां मानलक्षणम्
चक्षुरुन्मीलनं चैव संक्षिप्याह यथाक्रमम् ११

पितामहाद्यैरमरैर्मुनीश्वरैर्यथा यथोक्तं सकलं मयेन तत्
तथा तथोक्तं सुधियां दिवौकसां नृणां च युक्त्याखिलवस्तुलक्षणम्
१२

इति मयमते वस्तुशास्त्रे संग्रहाध्यायः प्रथमः

## अथ द्वितीयोऽध्यायः

अमर्त्याश्चैव मर्त्याश्च यत्र यत्र वसन्ति हि
तद् वस्त्विति मतं तज्ज्ञैस्तद्भेदं च वदाम्यहम् १

भूमिप्रासादयानानि शयनं च चतुर्विधम्
भूरेव मुख्यवस्तु स्यात् तत्र जातानि यानि हि २

प्रासादादीनि वास्तूनि वस्तुत्वाद् वस्तुसंश्रयात्
वस्तून्येव हि तान्येव प्रोक्तान्यस्मिन् पुरातनैः ३

वर्णगन्धरसाकारदिक्शब्दस्पर्शनैरपि
परीक्ष्यैवं यथायोग्यं गृहीतावधि निश्चिता ४

या सा भूमिरिति ख्याता वर्णानां च विशेषतः
द्विविधं तत् समुद्दिष्टं गौणमङ्गीत्यनुक्रमात् ५

ग्रामादीन्येव गौणानि भवन्त्यङ्गी मही मता
सभा शाला प्रपा रङ्गमण्डपं मन्दिरं तथा ६

प्रासाद इति विख्यातं शिबिका गिल्लिका रथम्
स्यन्दनं चैवमानीकं यानमित्युच्यते बुधैः ७

मञ्चं मञ्चिलिका काष्ठं पञ्जरं फलकासनम्
पर्यङ्कं बालपर्यङ्कं शयनं चैवमादिकम्  ८

चतुर्णामधिकाराणां भूरेवादौ प्रवेक्ष्यते
भूतानामादिभूतत्वादाधारत्वाज्जगत्स्थितेः  ९

चतुरश्रं द्विजातीनां वस्तु श्वेतमनिन्दितम्
उदुम्बरद्रुमोपेतमुत्तरप्रवणं वरम्  १०

कषायमधुरं सम्यक् कथितं तत् सुखप्रदम्
व्यासाष्टांशाधिकायामं रक्तं तिक्तरसान्वितम्  ११

प्राङ्निम्नं तत् प्रविस्तीर्णमश्वत्थद्रुमसंयुतम्
प्रशस्तं भूभृतां वस्तु सर्वसम्पत्करं सदा  १२

षडंशेनाधिकायामं पीतमम्लरसान्वितम्
प्लक्षद्रुमयुतं पूर्वावनतं शुभदं विशाम्  १३

चतुरंशाधिकायामं वस्तु प्राक्प्रवणान्वितम्
कृष्णं तत् कटुकरसं न्यग्रोधद्रुमसंयुतम्  १४

प्रशस्तं शूद्रजातीनां धनधान्यसमृद्धिदम्
एवं प्रोक्तो वस्तुभेदो द्विजानां भूपानां वै वैश्यकानां परेषाम्
योग्यं सर्वं भूसुराणां सुराणां भूपानां तच्छेषयोरुक्तनीत्या  १५

इति मयमते वस्तुशास्त्रे वस्तुप्रकारो नाम द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

देवानां तु द्विजातीनां चतुरश्रायताः श्रुताः
वस्त्वाकृतिरनिन्द्या सावाक्प्रत्यग्दिक्समुन्नता  १

हयेभवेणुवीणाब्धिदुन्दुभिध्वनिसंयुता

पुन्नाग जातिपुष्पाब्जधान्यपाटलगन्धकैः २

पशुगन्धसमा श्रेष्ठा सर्वबीजप्ररोहिणी
एकवर्णा घना स्निग्धा सुखसंस्पर्शनान्विता ३

बिल्वो निम्बश्च निर्गुण्डी पिण्डितः सप्तपर्णकः
सहकारश्च षड्वृक्षैरारूढा या समस्थला ४

श्वेता रक्ता च पीता च कृष्णा कापोतसन्निभा
तिक्ता च कटुका चैव कषायलवणाम्लका ५

मधुरा षड्रसोपेता सर्वसम्पत्करी धरा
प्रदक्षिणोदकवती वर्णगन्धरसैः शुभा ६

पुरुषाञ्जलिमात्रे तु दृष्टतोया मनोरमा
निष्कपाला निरुपला कृमिवल्मीकवर्जिता ७

अस्थिवर्ज्या नसुषिरा तनुवालुकसंयुता
अङ्गारैर्वृक्षमूलैश्च शूलैश्चापि पृथग्विधैः ८

पङ्कसङ्कर कूपैश्च दारुभिर्लोष्टकैरपि
शर्कराभिरयुक्ता या भस्माद्यैस्तु तुषैरपि ९

सा शुभा सर्ववर्णानां सर्वसम्पत्करी धरा
दध्याज्यमधुगन्धा च तैलासृग्गन्धिका च या १०

शवमीनपक्षिगन्धा सा धरा निन्दिता वरैः
सभा चैत्यसमीपस्था नृपमन्दिर संश्रिता ११

देवालयसमीपस्था कण्टकिद्रुमसंयुता
वृत्तत्रिकोण विषमा वज्राभा कच्छपोन्नता १२

चण्डालावासगच्छाया चर्मकारालयाश्रिता
एकद्वित्रिचतुर्मार्गा तरिताव्यक्तमार्गका १३

निम्नं यत् पणवाकारं पक्षीवमुरजोपमम्
मत्स्याभं तु चतुष्कोणे महावृक्षसमायुतम् १४

चैत्यवृक्षयुतं सालचतुष्कोणसमाश्रितम्
भुजङ्गनिलयं चैव सङ्करारामेव च १५

श्मशानं चाश्रमस्थानं कपिसूकरसन्निभम्
वनोरगनिभं टङ्कं शूर्पोलूखलसन्निभम् १६

शङ्खाभं शङ्कुनाभं च बिडालकृकलासवत्
ऊषरं कृमिभिर्जुष्टं गृहगौलिसमाकृति १७

अन्यदेवंविधं वस्तु निन्दितं वस्तुपाठकैः
बहुप्रवेशमार्गं च मार्गविद्धं च गर्हितम् १८

यत् कर्म विहितं मोहादेवंभूते तु वस्तुनि
तन्महादोषहेतुः स्यात् सर्वथा तद् विवर्जयेत् १९

श्वेतासृक्पीतकृष्णा हयगजनिनदा षड्रसा चैकवर्णा
गोधान्याम्भोजगन्धोपलतुषरहितावाक्प्रतीच्युन्नता या
पूर्वोदग्वारिसारा वरसुरभिसमा शूलहीनास्थिवर्ज्या
सा भूमिः सर्वयोग्या कण्दररहिता सम्मताद्यैर्मुनीन्द्रैः २०

इति मयमते वस्तुशास्त्रे भूपरीक्षा नाम तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

आकारवर्णशब्दादिगुणोपेतं भुवः स्थलम्
सङ्गृह्य स्थपतिः प्राज्ञो दत्त्वा देवबलिं पुनः १

स्वस्तिवाचकघोषेण जयशब्दादिमङ्गलैः
अपक्रामन्तु भूतानि देवताश्च सराक्षसाः २

वासान्तरं व्रजन्त्वस्मात् कुर्यां भूमिपरिग्रहम्
इति मन्त्रं समुच्चार्य विहिते भूपरिग्रहे ३

कृष्ट्वा गोमयमिश्राणि सर्वबीजानि वापयेत्
दृष्ट्वा तानि विरूढानि फलपक्वगतानि च ४

सवृषाश्च सवत्साश्च ततो गास्तत्र वासयेत्
यतो गोभिः परिक्रान्तमुपघ्राणैश्च पूजितम् ५

संहृष्टवृषनादैश्च निर्धौतकलुषीकृतम्
वत्सवक्त्रच्युतैः फेनैः संस्कृतं प्रस्रवैरपि ६

स्नातं गोमूत्रसेकैश्च गोपुरीषैः सलेपनम्
च्युतरोमन्थनोद्गारैर्गोष्पदैः कृतकौतुकम् ७

गोगन्धेन समाविष्टं पुण्यतोयैः शुभं पुनः
तथा पुण्यतिथोपेते नक्षत्रविषये शुभे ८

करणे च सुलग्ने च मुहूर्ते च बुधेप्सिते
अक्षतैः श्वेतपुष्पैश्च बलिकर्म विधीयते ९

ब्राह्मणैश्च यथाशक्त्या वाचयेत् स्वस्तिवाचकम्
वस्तुमध्ये ततस्तस्मिन् खानयेद् वसुधातलम् १०

अरत्निमात्रगम्भीरं चतुरश्र समन्वितम्
दिग्भागस्थमसम्भ्रान्तमसंक्षिप्तसमुच्छ्रयम् ११

अर्चयित्वा यथान्यायं तं कूपमभिवन्द्य च

चन्दनाक्षतमिश्रेण सर्वरत्नोदकेन च १२

पयसा तु ततः प्राज्ञो निशादौ परिपूरयेत्
तस्य कूपस्य चाभ्याशे शुचिर्भूत्वा समाहितः १३

भूमौ दर्भावकीर्णायां संविशेत् प्राक्शिरा बुधः
अयं मन्त्रः --
अस्मिन् वस्तुनि वर्धस्व धनधान्येन मेदिनि १४

उत्तमं वीर्यमास्थाय नमस्तेऽस्तु शिवा भव
उपवासमुपक्रामेदेतं मन्त्रं जपंस्ततः १५

अह्न आदौ परीक्षेत तं कूपं स्थपतिर्बुधः
सावशेषं जलं दृष्ट्वा तद् ग्राह्यं सर्वसम्पदे १६

विलन्ने वस्तुविनाशाय शुष्के धान्यधनक्षयः
पूरिते तन्मृदा खाते समता मध्यमा मता १७

उत्तमा भूर्मृदाधिक्या हीना हीना मृदा मही
तन्मध्यावटसन्दृष्टप्रदक्षिणचरोदकाम् १८

सुरभिप्रतिमां भूमिं गृह्णीयात् सर्वसम्पदे
एवं यथोक्तविधिना विविधं विदित्वा ग्रामाग्रहारपुरपत्तनखर्वटानि
स्थानीयखेटनिगमानि तथेतराणि यः संविविक्षुरवनीग्रहणं विदध्यात्
१९

इति मयमते वस्तुशास्त्रे भूपरिग्रहो नाम चतुर्थोऽध्यायः

## अथ पञ्चमोऽध्यायः

सर्वेषामपि वास्तूनां मानेनैव विनिश्चयः
तस्मान्मानोपकरणं वक्ष्ये संक्षेपतः क्रमात् १

परमाणुक्रमाद् वृद्धं मानाङ्गुलमिति स्मृतम्
परमाणुरिति प्रोक्तं योगिनां दृष्टिगोचरम्  २

परमाणुभिरष्टाभी रथरेणु रुदाहृतः
रथरेणुश्च वालाग्रं लिक्षायूकायवास्तथा  ३

क्रमशोऽष्टगुणैः प्रोक्तो यवाष्टगुणितोऽङ्गुलम्
अङ्गुलं तु भवेन्मात्रं वितस्तिर्द्वादशाङ्गुलम्  ४

तद्द्वयं हस्तमुद्दिष्टं तत् किष्क्वति मतं वरैः
पञ्चविंशतिमात्रं तु प्राजापत्यमिति स्मृतम्  ५

षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुर्ग्रहः
याने च शयने किष्कुः प्राजापत्यं विमानके  ६

वास्तूनां तु धनुर्मुष्टिर्ग्रामादीनां धनुर्ग्रहः
सर्वेषामपि वास्तूनां किष्कुरे वाथवा मतः  ७

रत्निश्चैवमरत्निश्च भुजो बाहुः करः स्मृतः
हस्ताश्चतुर्धनुर्दण्डो यष्टिश्चैव प्रकीर्तितः  ८

दण्डेनाष्टगुणा रज्जुर्दण्डैर्ग्रामं च पत्तनम्
नगरं निगमं खेटं वेश्मादीन्यपि मानयेत्  ९

गृहादीनां तु हस्तेन याने च शयने बुधैः
वितस्तिना विधातव्यं क्षुद्राणामङ्गुलेन तु  १०

यवेनाल्पीयसां मानमेवं मानक्रमं विदुः
मध्यमाङ्गुलमिध्यस्थपर्वमात्रायतं तु यत्  ११

कर्तुर्मात्राङ्गुलं प्रोक्तं यागादीनां प्रशस्यते

देहलब्धाङ्गुलं यत्तदुपरिष्टाद् विधीयते १२

एवमेवं विदित्वा तु स्थपतिर्मानयेद्दृढम्
भवन्ति शिल्पिनो लोके चतुर्धा स्वस्वकर्मभिः १३

स्थपतिः सूत्रग्राही च वर्धकिस्तक्षकस्तथा
प्रसिद्धदेशसङ्कीर्णजातिजोऽभीष्टलक्षणः १४

स्थपतिः स्थापनार्हः स्यात् सर्वशास्त्र विशारदः
न हीनाङ्गोऽतिरिक्ताङ्गो धार्मिकस्तु दयापरः १५

अमात्सर्योऽनसूयश्चा तन्द्रितस्त्वभिजातवान्
गणितज्ञः पुराणज्ञः सत्यवादी जितेन्द्रियः १६

चित्रज्ञः सर्वदेशज्ञश्चान्नदश्चाप्यलुब्धकः
अरोगी चाप्रमादी च सप्तव्यसनवर्जितः १७

सुनामा दृढबुद्धिश्च वास्तुविद्याब्धिपारगः
स्थपतेस्तस्य शिष्यो वा सूत्रग्राही सुतोऽथवा १८

स्थपत्याज्ञानुसारी च सर्वकर्मविशारदः
सूत्रदण्ड प्रपातज्ञो मानोन्मानप्रमाणवित् १९

शैलदार्विष्टकादीनां सूत्रग्राहिवशानुगः
तक्षणात् स्थूलसूक्ष्माणां तक्षकः स तु कीर्तितः २०

मृत्कर्मज्ञो गुणी शक्तः सर्वकर्मस्वतन्त्रकः
तक्षितानां तक्षकानामुपर्युपरि युक्तितः २१

वृद्धिकृद् वर्धकिः प्रोक्तः सूत्रग्राह्यनुगः सदा
कर्मिणो निपुणाः शुद्धा बलवन्तो दयापराः २२

गुरुभक्ताः सदा हृष्टाः स्थपत्याज्ञानुगाः सदा
तेषामेव स्थपत्याख्यो विश्वकर्मेति संस्मृतः २३

एभिर्विना हि सर्वेषां कर्म कर्तुं न शक्यते
तस्मादेतत् सदा पूज्यं स्थपत्यादिचतुष्टयम् २४

एभिः स्थपत्यादिभिरत्र लोके विना ग्रहीतुं सुकृतं न शक्यम्
तैरेव सार्धं गुरुणाऽथ तस्माद्व्रजन्ति मोक्षं भवतस्तु मर्त्याः २५

इति मयमते मानोपकरं नाम पञ्चमोऽध्यायः

## अथ षष्टोऽध्यायः

वक्ष्येऽहं दिक्परिच्छेदं शङ्कुनार्कोदये सति
उत्तरायणमासे तु शुक्लपक्षे शुभोदये १

प्रशस्तपक्षनक्षत्रे विमले सूर्यमण्डले
गृहीतवास्तुमध्ये तु समं कृत्वा भुवः स्थलम् २

जलेन दण्डमात्रेण समं तु चतुरश्रकम्
तन्मध्ये स्थापयेच्छङ्कुं तन्मानमधुनोच्यते ३

अरत्निमात्रमायाममग्रमेकाङ्गुलं भवेत्
मूलं पञ्चाङ्गुलं व्यासं सुवृत्तं निर्व्रणं वरम् ४

अष्टादशाङ्गुलं मध्यं कन्यसं द्वादशाङ्गुलम्
आयामसदृशं नाहं मूलेऽग्रे तु नवाङ्गुलम् ५

दन्तं वै चन्दनं चैव खदिरः कदरः शमी
शाकश्च तिन्दुकश्चैव शङ्कुवृक्षा उदीरिताः ६

अन्यैः सारद्रुमैः प्रोक्तं तस्याग्रं चित्रवृत्तकम्
शङ्कुं कृत्वा दिनादौ तु स्थापयेदात्तभूतले ७

शङ्कुद्विगुणमानेन तन्मध्ये मण्डलं लिखेत्
पूर्वापराह्णयोश्छाया यदि तन्मण्डलान्तगा ८

तद्बिन्दुद्वयगं सूत्रं पूर्वापरदिशीष्यते
बिन्दुद्वयान्तर भ्रान्तशफराननपुच्छगम् ९

दक्षिणोत्तरगं सूत्रमेवं सूत्रद्वयं न्यसेत्
उदगाद्यपरान्तानि पर्यन्तानि विनिक्षिपेत् १०

सूत्राणि स्थपतिः प्राज्ञः प्रागुत्तरमुखानि च
कन्यायां वृषभे राशावपच्छायात्र नास्ति हि ११

मेषे च मिथुने सिंहे तुलायां द्व्यङ्गुलं नयेत्
कुलीरे वृश्चिके मत्स्ये शोधयेच्चतुरङ्गुलम् १२

धनुःकुम्भे षडङ्गुल्यं मकरेऽष्टाङ्गुलं तथा
छायाया दक्षिणे वामे नीत्वा सूत्रं प्रचारयेत् १३

अष्टयष्ट्यायता रज्जुस्तालकेतकवल्कलैः
कार्पासपट्टसूत्रैश्च दर्भैर्न्यग्रोधवल्कलैः १४

अङ्गुलाग्र समस्थूला त्रिवर्तिर्ग्रन्थिवर्जिता
देवद्विजमहीपानां शेषयोश्च द्विवर्त्तिका १५

खदिरः खादिरश्चैव मधूकः क्षीरिणी तथा
खातशङ्कुद्रुमाः प्रोक्ता अन्यं वा सारदारुजम् १६

एकादशाङ्गुलाद्येकविंशन्मात्रं तु दैर्घ्यतः
पूर्णमुष्टिस्तु नाहं स्यान्मूलं सूचीनिभं भवेत् १७

गृहीत्वा वामहस्तेन प्राङ्मुखो वाप्युदङ्मुखः

दक्षिणेनाष्टीलं गृह्य ताडयेदष्टभिः क्रमात्  १८

प्रहारैः स्थपतिः प्राज्ञस्तत् कुर्यात् स्थापकाज्ञया
प्रमाणसूत्रमित्युक्तं प्रमाणैर्निश्चितं हि यत्  १९

तद्बहिः परितो भागे सूत्रं पर्यन्तमिष्यते
गर्भसूत्रादिविन्याससूत्रं देवपदोचितम्  २०

पदविन्याससूत्रं हि विन्यासः सूत्रमिष्यते
गृहाणां दक्षिणे गर्भस्तत्पार्श्वे सूत्रपातनम्  २१

तत्सूत्राच्चङ्कमानेन नीत्वा शङ्कुं निखानयेत्
उपानं निष्क्रमार्थं वा भित्त्यर्थं वाऽथ तद् भवेत्  २२

नगरग्रामदुर्गेषु वाय्वादी रज्जुपातनम्
अवाच्याशाद्युदीच्यन्तं प्राक्प्रत्यग्गतसूत्रकम्  २३

प्रतीच्याशादिपूर्वान्तं विसृजेद् दक्षिणोत्तरम्
ब्रह्मस्थानात् पूर्वगतं तत् त्रिसूत्रं तदुच्यते  २४

ततो धनं पश्चिमगं धान्यं दक्षिणगं ततः
ब्रह्मस्थानादुत्तरगं सुखमित्यभिधीयते  २५

सुखप्रमाणं यत् सूत्रं तत्प्रमाणमिहोच्यते
एकहस्तं द्विहस्तं वा त्रिहस्तं परितोऽधिकम्  २६

विमानं मण्डपव्यासात् खानयेत् तद्बलार्थकम्  २७

द्व्येकं नो नैकनेत्रे नयनगुणयुगं चाब्धिरुद्राक्षमक्षी
नेत्रैकं नो न चन्द्रं नयननयनकं वह्निवेदाब्धिबाणम्
षट्षट्सप्ताष्टकाष्टैर्मुनिरसरसकं भूतवेदाब्ध्यजाक्षं

नेत्रं मात्रं च मेषादिषु दशदशकेऽस्मिन् दिने त्यज्य युञ्ज्यात्  २८

समीच्य भानोर्गमनं सराशिकं त्यजेत् पुरोक्ताङ्गुलिमन्त्रयुक्तितः
ततस्तु काष्ठादुपगृह्य तद्वशाद्विसृज्य सूत्रम् विदधीत च स्थलम्  २९

इति मयमते वस्तुशास्त्रे दिक्परिच्छेदो नाम षष्ठोऽध्यायः

## अथ सप्तमोऽध्यायः

वक्ष्येऽहं पदविन्यासं सर्ववस्तुसनातनम्
सकलं पेचकं पीठं महापीठमतः परम्  १

उपपीठमुग्रपीठं स्थण्डिलं नाम चण्डितम्
मण्डूकपदकं चैव पदं परमशायिकम्  २

तथासनं च स्थानीयं देशीयोभयचण्डितम्
भद्रं महासनं पद्मगर्भं च त्रियुतं पदम्  ३

व्रतभोगपदं चैव कर्णाष्टकपदं तथा
गणितं पादमित्युक्तं पदं सूर्यविशालकम्  ४

सुसंहितपदं चैव सुप्रतीकान्तमेव च
विशालं विप्रगर्भं च विश्वेशं च ततः परम्  ५

तथा विपुलभोगं च पदं विप्रतिकान्तकम्
विशालाक्षपदं चैव विप्रभक्तिकसंज्ञकम्  ६

पदं विश्वेशसारं च तथैवेश्वरकान्तकम्
इन्द्रकान्तपदं चैव द्वात्रिंशत् कथितानि वै  ७

सकलं पदमेकं स्यात् पेचकं तु चतुष्पदम्
पीठं नवपदं चैव महापीठं द्विरष्टकम्  ८

पञ्चविंशत्युपपीठं षट्षडेवोग्रपीठकम्
स्थण्डिलं स्प्तसप्तांशं मण्डूकं चाष्टकाष्टकम् ९

परमशायिपदं चैव नन्दनन्दपदं भवेत्
स्रासनं शतभागं स्यादेकविंशच्छतं पदम् १०

स्थानीयं स्याच्चतुश्चत्वारिंशच्छतपदाधिकम्
देशीयं नवषष्ट्यंशं शतं चोभयचण्डितम् ११

षण्णवत्यधिकं चैव शतं भद्रं महासनम्
सपञ्चविंशद् द्विशतं पद्मगर्भमितिइ स्मृतम् १२

षडाधिक्यं तु पञ्चाशदि्द्वशतं त्रियुतं पदम्
द्विशतं सनवाशीति व्रतभोगमिति स्मृतम् १३

त्रिशतं च चतुर्विंशत् कर्णाष्टकपदं तथा
त्रिशतं चैकषष्ट्यंशं गणितं पादसंज्ञितम् १४

चतुःशतपदं सूर्यविशालं परिकीर्तितम्
सुसंहितपदं चैकचत्वारिशच्चतुःशतम् १५

सवेदाशीतिचत्वारः शतं सुप्रतिकान्तकम्
नवविंशत्पञ्चशतं विशालं पदमीरितम् १६

षट्सप्ततिः पञ्चशतं विप्रगर्भमिति स्मृतम्
विश्वेशं षट्शतं पश्चात् पञ्चविंशत्पदं स्मृतम् १७

षट्सप्ततिः षट्शतकं विपुलभोगमिति स्मृतम्
नवविंशतिकं सप्तशतं विप्रतिकान्तकम् १८

विशालाक्षपदं वेदाशीतिः सप्तशताधिकम्

सैकाष्टपञ्चयुक्तं चाष्टशतं विप्रभक्तिकम् १९

वेश्वेशसारमित्युक्तमेवं नवशतं पदम्
सैकषष्ट्यां नवशतं पदमीश्वरकान्तकम् २०

वतुर्विंशतिसंयुक्तं सहस्रपदसंकुलम्
इन्द्रकान्तमिति प्रोक्तं तन्त्रविद्भिः पुरातनैः २१

आद्यं पदं सकलमेकपदं यतीनामिष्टं हि विष्टरमहाशनवह्निकार्यम्
पित्र्यामरादियजनं गुरुपूजनं च भान्वार्कितोयशशिनामकसूत्रयुक्ते २२

पैशाचभूतसविषग्रहरक्षकास्ते पूज्या हि पेचकपदे चतुरंशयुक्ते
तस्मिन् विधेयमधुना विधिना विधिज्ञैः शैवं तु निष्कलमलं सकलं च युक्त्या २३

अथ पीठपदे नवभागयुते दिशि दिश्यथ वेदचतुष्टयकम्
विदुरीशपदाद्युदकं दहनं गगनं पवनं पृथिवी ह्यबहिः २४

षोडशांशं महापीठं पञ्चपञ्चामरान्वितम्
ईशो जयन्त आदित्यो भृशोऽग्निर्वितथो यमः २५

भृङ्गश्च पितृसुग्रीवौ वरुणः शोषमारुतौ
मुख्यः सोमोऽदितिश्चेति बाह्यदेवाः प्रकीर्तिताः २६

आपवत्सार्यसावित्रा विवस्वानिन्द्रमित्रकौ
रुद्रजो भूधरश्चान्तर्मध्ये ब्रह्मा स्थितः प्रभुः २७

तत्पार्श्वयोर्द्वयोरेकभागेनैकेन वर्धनात्
उपपीठं भवेदत्र देवतास्ताः पदे स्थिताः २८

तत्तत्पार्श्वद्वयोश्चैवमेकैकांशविवर्धनात्

इन्द्रकान्तपदं यावत् तावद् युञ्जीत बुद्धिमान्  २९

समानि यानि भागानि चतुःषष्टिवदाचरेत्
असमान्यपि सर्वाणि चैकाशीतिपदोक्तवत्  ३०

पदानामपि सर्वेषां मण्डूकं चापि तत्परम्
चण्डितं सर्ववस्तूनामाहत्यं च यतस्ततः  ३१

तस्मात् संक्षिप्य तन्त्रेभ्यो वक्ष्येऽहमपि तद् द्वयम्
चतुःषष्टिपदे चैकाशीतौ सकलनिष्कले  ३२

सूत्रे च पदमध्ये च ब्रह्माद्याः स्थापिताः सुराः
प्रागुदग्दिक्समारभ्यैवोच्यन्ते देवताः पृथक्  ३३

ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः
आदित्यः सत्यकश्चैव भृशश्चैवान्तरिक्षकः  ३४

अग्निः पूषा च वितथो राक्षसश्च यमस्तथा
गन्धर्वो भृङ्गराजश्च मृषश्च पितृदेवताः  ३५

दौवारिकश्च सुग्रीवः पुष्पदन्तो जलाधिपः
असुरः शोषरोगौ च वायुर्नागस्तथैव च  ३६

मुख्यो भल्लाटकश्चैव सोमश्चैव मृगस्तथा
अदितिश्चोदितिश्चैव द्वात्रिंशद् बाह्यदेवताः  ३७

आपश्चैवापवत्सश्चैवान्तः प्रागुत्तरे स्मृतौ
सविन्द्रश्चैव साविन्द्रश्चान्तः प्राग्दक्षिणे स्मृतौ  ३८

इन्द्रश्चैवेन्द्रराजश्च दक्षिणापरतः स्थितौ
रुद्रो रुद्रजयश्चैव पश्चिमोत्तरतो दिशि  ३९

ब्रह्मा मध्ये स्थितः शम्भुस्तन्मुखस्थाश्चतुःसुराः
आर्यो विवस्वान् मित्रश्च भूधरश्चैव कीर्तिताः ४०

चरकी च विदारी च् पूतना पापराक्षसी
ईशानादि बहिः स्थाप्याश्चतुष्कोणे स्त्रियः स्मृताः ४१

नपदा बलिभोक्तारः शेषाणां पदमुच्यते
विंशत्सूत्रैः सन्धिभिः सप्तवेदैः
षट्षट्संख्याभिश्चतुष्कैश्च षट्कैः
अर्कैः शूलैर्वेदसंख्याः सिराभिः
संयुक्तं स्यादष्टकेनैकमेतत् ४२-१

चतुःषष्टिपदे मध्ये ब्रह्मणश्च चतुष्पदम् ४३

आर्यकादिचतुर्देवाः प्रागादित्रित्रिभागिनः
आपाद्यष्टामराः कोणेष्वर्धार्धपदभागिनः ४४

महेन्द्रराक्षसाद्याश्च पुष्पभल्लाटकादयः
दिशि दिश्यथ चत्वारो देवा द्विपदभोगिनः ४५

जयन्तश्चान्तरिक्षश्च वितथश्च मृषस्तथा
सुग्रीवो रोगमुख्यश्च दितिश्चैकैकभागिनः ४६

ईशाद्यष्टामराः शेषाः कोणेष्वर्धपदेश्वराः
एवं क्रमेण भुञ्जीरन् मण्डूके वास्तुदेवताः ४७

स्वस्वप्रदक्षिणवशात् पदभुक्तिक्रमं विदुः
ब्रह्माणं च निरीक्ष्यैते स्थिताः स्वस्वपदेऽमराः ४८

षड्वंशमेकहृदयं चतुर्मर्मं चतुःसिरम्
मेदिन्यां वास्तुपुरुषं निकुब्जं प्राक्शिरं विदुः ४९

तस्योत्तमाङ्गं विज्ञेयमार्यको नाम देवता
सविन्द्रो दक्षिणभुजः साविन्द्रः कक्षमुच्यते ५०

आपश्चैवापवत्सश्च सकक्षो वामतो भुजः
विवस्वान् दक्षिणं पार्श्वं वामपार्श्वं महीधरः ५१

मध्ये ब्रह्ममयः कायो मित्रः पुंस्त्वं विधीयते
इन्द्रश्चैवेन्द्रराजश्च दक्षिणः पाद ईरितः ५२

रुद्रो रुद्रजयो वामपादः शेते त्वधोमुखः
वस्तुत्रिभागमध्ये तु वंशाः षट् प्रागुदङ्मुखाः ५३

वस्तुमध्ये तु मर्माणि ब्रह्मा हृदयमुच्यते
निष्कूटांशाः सिरा ज्ञेया इत्येष पुरुषः स्मृतः ५४

गृहे गृहे मनुष्याणां शुभाशुभकरः स्मृतः
तस्याङ्गानि गृहाङ्गैश्च विद्वान् नैवोपपीडयेत् ५५

व्याधयस्तु यथासंख्यं भर्तुरङ्गे तु संश्रिताः
तस्मात् परिहरेद् विद्वान् पुरुषाङ्गं तु सर्वथा ५६

चत्वारिंशच्च पञ्चैते देवतानां समुच्चयः
अष्टाष्टांशे कस्य धस्तन्मुखानामिष्टं गांशं व्यञ्जनं षोडशानाम्
अष्टानां कः षोडशानां खभागं मण्डूकाख्ये स्थण्डिले तैतिलेषु ५७

परमशायिपदे नवभागभाक्कमलजो मुखतस्तु चतुःसुराः
रसपदा द्विपदा हि विदिक्स्थिता बहिरथैकपदाः सकलामराः ५८

इति मयमते वस्तुशास्त्रे पददेवताविन्यासो नाम सप्तमोऽध्यायः

## अथाष्टमोऽध्यायः

देवानां स्वपदस्थानां बलिकर्म विधीयते
सामान्याहत्यमार्गेण ब्रह्मादीनां यथाक्रमम् १

गन्धमाल्यैश्च धूपेन पयसा मधुसर्पिषा
पायसौदनलाजैश्च ब्रह्मस्थानं समर्चयेत् २

आर्यके फलभक्ष्यं स्यान्माषान्नं च तिलानि च
विवस्वति विनिक्षिप्तं दधि दूर्वा च मित्रके ३

महीधरे भवेद्दुग्धमेवमन्तर्बलिः स्मृतः
पर्जन्यस्याज्यमैन्द्रस्य नवनीतं सपुष्पकम् ४

इन्द्रे कोष्ठं च पुष्पं च मधु कन्दाश्च भास्करे
सत्यके मधुकं दद्याद्भृशाय नवनीतकम् ५

माषं रजनिचूर्णं च गगनस्य बलिं ददेत्
दुग्धाज्यं तगरं वह्नेः शिम्बान्नं पूष्णि पायसम् ६

कङ्क्वन्नं वितथे शीधु राक्षसे बलिरिष्यते
शिम्बान्नं कृसरं याम्ये गन्धर्वेऽखिलगन्धकम् ७

भृङ्गराजेऽब्धिमत्स्यः स्यान्मृषे मत्स्यौदनं विदुः
निर्ऋतौ तैलपिण्याकं बीजं दौवारिके बलिः ८

सुग्रीवे मोदकं पुष्पदन्तके पुष्पतोयकम्
वरुणे पायसं धान्यं शोणितेनासुरे बलिः ९

सतिलं तण्डुलं शोषे रोगे स्याच्छुष्कमत्स्यकम्
स्विन्नं हारिद्रकं वायौ नागे मद्यं च लाजकम् १०

धान्यचूर्णं हि मुख्यस्य दधि सर्पिश्च सम्मतम्
गुलौदनं तु भल्लाटे सोमे दुग्धौदनं ददेत् ११

शुष्कमांसं मृगे दद्याद् देवमातरि मोदकम्
उदितौ तिलभक्ष्येण क्षीरान्नं सर्पिरीशके १२

लाजं धान्यं सविन्द्रस्य साविन्द्रे गन्धतोयकम्
बस्तमेदस्तथा मुद्गचूर्णमिन्द्रेन्द्रराजयोः १३

रुद्रे रुद्रजये मांसं स्विन्नमापापवत्सयोः
कुमुदं मत्स्यमांसं च शङ्खकच्छपमांसकम् १४

मद्यमाज्यं चरक्यास्तु विदार्या लवणो बलिः
पूतनायास्तिलं पिष्टमन्याया मुद्गसारकम् १५

साधारणबलिः शुद्धभोजनं सघृतं दधि
सर्वेषामपि देवानां गन्धादीनि ददेत् क्रमात् १६

कन्यका वाऽथ वेश्या वा बलिधारणयोग्यकाः
अङ्गन्यासकरन्यासैः पूतचेता यथाक्रमम् १७

ओङ्कारादिनमोन्तेन स्वस्वनामाभिधाय च
दत्वा पूर्वं जलं पश्चात् साधारणबलिं ददेत् १८

तत्तद्योग्यबलिं पश्चाद् देयं तोयं तथा बुधैः
ग्रामादीनां तु मण्डूकपदे परमशायिके १९

सन्तर्प्य देवता ह्येवं पूर्वोक्तविधिना क्रमात्
विसर्जयेत् ततो देवान् विन्यासार्थं तु मन्त्रवत् २०

ब्रह्माणं बाह्यदेवांश्च तत्तदुक्तपदे न्यसेत्

देवालयविधानार्थं द्वारार्थं ते प्रकीर्तिताः २१

शेषाश्च निष्पदाः सर्वे रक्षार्थं तु निवेशिताः
एवं ग्रामादिषु प्रोक्तं रहस्यमिदमीरितम् २२

कृतोपवासः स्थपतिः प्रभाते विशुद्धदेहोऽविकलं गृहीत्वा
विशेषसामान्यबलिं सुराणां यथोक्तनीत्या विदधीत सम्यक् २३

इति मयमते वस्तुशास्त्रे बलिकर्मविधानो नाम अष्टमोऽध्यायः

## अथ नवमोऽध्यायः

ग्रामादीनां मानं विन्यासं चापि वच्यते विधिना
दण्डानां पञ्चशतं क्रोशं तद्द्विगुणमर्धगव्यूतम् १

गव्यूतं तद्द्विगुणं ह्यष्टसहस्रं तु योजनं विद्यात्
अष्टधनुश्चतुरश्रा काकणिका तच्चतुर्गुणं माषम् २

माषचतुर्वर्तनकं तत्पञ्चगुणं हि वाटिका कथिता
वाटिकया युगगुणिता ग्रामकुटुम्बावनिः श्रेष्ठा ३

एवं भूगतमानं दण्डैस्तेषां तु वच्यते मानम्
ग्रामस्य शतसहस्रैर्दण्डैः पर्यन्तमानमिदमुक्तम् ४

विंशतिसहस्रदण्डात् तत्समवृद्ध्या तु पञ्चमानं स्यात्
ग्रामे विंशतिभागे कुटुम्बभूमिस्तदेकभागेन ५

दण्डैः पञ्चशतैर्यद्धीनं ग्रामस्य मानमिदम्
तस्मात् पञ्चशतद्धर्या यावद् विंशत्सहस्रदण्डान्तम् ६

प्रोक्तं चत्वारिंशद्भेदं ग्रामस्य मानमिदम्
द्विसहस्रदण्डमानं सार्धसहस्रं सहस्रदण्डं च ७

नवशतमथ सप्तशतं पञ्चशतं त्रिशतमिति च विस्तारम्
नगरस्य सहस्रादिद्विसहस्रान्तं च दण्डमानं स्यात् ८

नगरस्याष्टसहस्रैर्दण्डैः पर्यन्तमानमिदम्
द्विद्विसहस्रन्नयतो द्विसहस्रान्तं चतुर्विधं मानम् ९

ग्रामः खेटः खर्वटमथ दुर्गं नगरमिति च पञ्चविधम्
दण्डैस्तेषां मानं वच्येऽहं त्रित्रिभेदभिन्नानाम् १०

चतुरधिकषष्टिदण्डो ग्रामः स्याद्धीनहीनमिति कथितः
ग्रामस्य मध्यमस्य द्विगुणं रिगुणं तथोत्तमं प्रोक्तम् ११

षट्पञ्चाशद्द्विशतं हीनं खेटं सविंशति त्रिशतम्
मध्यममुत्तममेवं सचतुरशीति त्रिशतदण्डम् १२

अष्टौ चत्वारिंशच्चतुःशतं द्वादशं च पञ्चशतम्
षट्सप्ततिपञ्चशतं हीनं मध्योत्तमं च खर्वटकम् १३

चत्वारिंशत्षट्शतमधमं दुर्गं चतुःसप्तशतदण्डम्
मध्यममुत्तमदुर्गं सप्तशतं षष्टिरष्टौ हि १४

द्वात्रिंशदष्टशतकं नगरं षण्णवत्यष्टशतदण्डम्
षष्टिर्नवशतमधमं मध्यममुत्कृष्टमिति यथासंख्यम् १५

षोडशदण्डविवृद्ध्या प्रत्येकं नवविधं भवति
द्विगुणं त्रिपादमर्धं पादं तेषां मुखायतं विपुलात् १६

व्यासषडष्टांशैकं चतुरश्रं वा यथेष्टं स्यात्
तस्मिन् विपुलायामे दण्डैरोजैः प्रमाणमात्तव्यम् १७

शेषं वाटधरार्थं ग्रामादिषु सर्ववस्तुषु च

आयादिसम्पदर्थं वृद्धिं हानिं च यष्टिभिः कुर्यात्  १८

आयव्ययर्क्षयोन्यायुभिरथ तिथिभिश्च वारैश्च
यजमानवस्तुनामजन्मर्क्षेणाविरोधिकं यत्तु  १९

तन्मानेन समेतं गृह्णीयात् सर्वसम्पत्तयै
व्यासायामसमूहे वसुनिधिगुणिते दिनेशधर्महृते  २०

आयव्ययमवशिष्टं रामघ्नेऽष्टापहृच्छेषम्
ध्वजधूमसिंहश्वावृषखरगजकाकाश्च योनिगणाः  २१

अष्टौ योनय उदिता ध्वजहरिवृषहस्तिनः शुभदाः
पुनरपि वसुभिर्गुणिते त्रिनवाहत्या फलं वयः शिष्टम्  २२

नक्षत्रं परिणाहे त्रिंशद्व्याप्ते तिथिर्यमीशहृते
वारं सूर्यमुखं स्याद् बुद्ध्वैवं सर्ववस्तु क्रणीयम्  २३

आयाधिकमथ सुखदं व्ययमधिकं सर्वनाशं स्यात्
विपरीते तु विपत्त्यै तस्मात् सम्यक् परीक्ष्य कर्तव्यम्  २४

द्वादशसहस्रविप्रैर्यन्निष्ठितमुत्तमोत्तमं ग्रामम्
दशसाहस्रैर्मध्यममधमं स्यादष्टसाहस्रैः  २५

सप्तसहस्रैर्विप्रैर्मध्यमोत्तममित्यभीष्टं स्यात्
षट्साहस्रैर्मध्यममधमं तु पञ्चसाहस्रैः  २६

अधमोत्तमं तु चातुःसाहस्रैस्तु त्रिसाहस्रैः
अधमसमं द्विसहस्रैरधमाधममेव निर्दिष्टम्  २७

साहस्रैर्द्विजसङ्घैर्नीचोत्तममाहुराचार्याः
सप्तशतैरधममध्यममिह पञ्चशतैस्तु नीचाल्पम्  २८

साष्टशतं तु द्विगुणं त्रिगुणं वेदाधिकं तथाशीतिः
अष्टाष्टकपञ्चाशद् द्वात्रिंशच्च त्रिरष्टौ हि २९

द्वादशषोडशविप्रैर्दशभेदं क्षुद्रकं ग्रामम्
अन्यदशक्तानां चेद् दानं दशभूसुरान्तमेकादि ३०

एककुटुम्बिससमेतं कुटिकं स्यादेकभोगमिति कथितम्
तस्य सुखालयमिष्टं शेषाणां दण्डकादीनि ३१

युग्मायुग्मविभागैर्द्विविधं स्यात् सर्ववस्तुविन्यासम्
युग्मे सूत्रपथं स्यादसमे पदमध्यमे च वीथी स्यात् ३२

अन्योन्यसङ्करश्चेदशुभं स्यात् सर्वजन्तूनाम्
दण्डकमपरं स्वस्तिकमित ऊर्ध्वं प्रस्तरं चैव ३३

पश्चात् प्रकीर्णकं स्यान्नन्द्यावर्तं परागमथ पद्मम्
स्याच्छ्रीप्रतिष्ठितेनैवाष्टविधं ग्राममुद्दिष्टम् ३४

सर्वेषां ग्रामाणां मङ्गलवीथ्यावृता बहिस्त्वबहिः
ब्रह्मस्थानं ह्युदितं तस्मिन् देवालयं तु वा पीठम् ३५

एकद्वित्रिचतुर्भिः पञ्चभिरपि कार्मुकैश्च मार्गततिः
प्राक्प्रत्यग्गतमार्गा ऋतुदण्डमहापथाख्यास्ते ३६

मध्यमयुक्ता वीथी ब्रह्माख्या सैव नाभिः स्यात्
द्वारसमेता वीथी राजाख्या च द्विपार्श्वतः क्षुद्रा ३७

सर्वाः कुट्टिमकाख्या मङ्गलवीथी तथैव रथमार्गम्
तिर्यग्द्वारसमेता नाराचपथा इति ख्याता ३८

उत्तरदिङ्मुखमार्गाः क्षुद्रार्गलवामनाख्यपथाः

ग्रामावृता मङ्गलवीथिकाख्या पुरावृता या जनवीथिका स्यात्
तयोस्तु रथ्याभिहिताभिधा स्यात् पुरातनैरन्यतमेष्वथैवम् ३९

द्विजकुलपरिपूर्णं वस्तु यन्मङ्गलाख्यं
नृपवणिगभियुक्तं वस्तु यत्तत् पुरं स्यात्
तदितरजनवासं ग्राममित्युच्यतेऽस्मिन्
मठमिति पठितं यत् तापसानां निवासम् ४०

प्रागुदगग्रं मार्गं ककनीकृतदण्डवत्तु तन्मध्ये ४१

द्वारचतुष्टययुक्तं दण्डकमिति भण्यते मुनिभिः
दण्डवदेका वीथी साप्येवं दण्डकं प्रोक्तम् ४२

नवपदयुक्ते ग्रामे परितो मार्गं पदस्य तस्य बहिः
तस्मात् प्रागुदगग्रात् प्राग्वीथी दक्षिणाग्रा सा ४३

तस्मात् प्राग्दक्षिणतो दक्षिणवीथी प्रतीचिमुखा
तस्मादवागपरतः पश्चिमवीथ्यग्रमुत्तरतः ४४

अपरोत्तरतस्तस्मादुत्तरवीथ्यां मुखं प्राच्याम्
एतत् स्वस्तिकमुदितं स्वस्त्याकृत्या चतुर्मार्गम् ४५

प्राक्प्रत्यग्गतमार्गैस्त्रिभिरुदगग्रैस्त्रिभिश्चतुर्भिरथो
पञ्चभिरपि षट्सप्तभिरपि युक्तं प्रस्तरं पञ्च ४६

प्रागग्रैस्तु चतुर्भिर्द्वादशशिवपङ्क्ति नन्दवसुमार्गैः
उदगग्रैरभियुक्तं ह्येतत् प्रोक्तं प्रकीर्णकं पञ्च ४७

प्राक्प्रत्यग्गतमार्गैः पञ्चभिरुदगग्रै स्त्रयोदशभिः
त्रिःसप्तभिरथ तिथिभिः षोडशभिः सप्तदशभिरपि मार्गैः ४८

युक्तं नन्द्यावर्तं दिक्षु चतुर्द्वारसंयुक्तम्
नन्द्यावर्ताकृत्या बाह्ये द्वारैरबाह्यतो मार्गैः ४९

युक्तानेकैर्युक्तं नन्द्यावर्ताभमिदमुदितम्
आद्यैरष्टादशभिर्द्वाविंशत्यङ्ककैरुदग्वक्त्रैः ५०

षड्भिः प्राङ्मुखमार्गैर्युक्तं ह्येतत् परागमिति कथितम्
प्राक्प्रत्यग्गतमार्गैः सप्तभिरुदगग्रैस्त्रिवेदशरैः ५१

षट्सप्तभिरपि युक्तैर्विंशतिभिः पञ्चधा पद्मम्
अष्टभिरथ पूर्वाग्रैरुदगग्रैः साष्टविंशतिभिः ५२

आद्यैर्द्विः षोडशभिर्मार्गैरन्त्यैर्युतं यत्तु
तच्छ्रीप्रतिष्ठितं स्यादष्टविधं ग्राममुद्दिष्टम् ५३

अथवा श्रीवत्सादिकमुपनेतव्यं तु विन्यासम्
सर्वेषां ग्रामाणां नाभिं न प्रोतयेन्मतिमान् ५४

ग्रामे वाऽथ गृहे वा दण्डच्छेदोऽपि नैव कर्तव्यः
सकलाद्यासनकान्तं विन्यासार्थं पदं बुधैर्ग्राह्यम् ५५

क्षुद्रग्रामे मार्गाश्चत्वारश्चाष्ट मध्यमे ग्रामे
द्वादश षोडश मार्गा ग्रामेषूत्कृष्टकेषु मताः ५६

भल्लाटे च महेन्द्रे राक्षसपादे तु पुष्पदन्तपदे
द्वारायतनस्थानं जलमार्गाश्चापि चत्वारः ५७

वितथपदेऽथ जयन्ते सुग्रीवांशे च मुख्यदेवपदे
भृशपूषभृङ्गराजा दौवारिकशोष नागदितिजलदाः ५८

स्थानमुपद्वाराणामष्टौ देवा इमे कथिताः

त्रिकरं पञ्चकरं तत् सप्तकरं द्वारविस्तरम्  ५९

तारद्विगुणोत्सेधं चाध्यर्धं वाङ्घ्रिहीनं तत्
सर्वेषां ग्रामाणां परितः परिखा बहिश्च वप्राश्च  ६०

ग्रामादयोऽपि नद्या दक्षिणतीरे तदन्वितायामाः
नवनववसुवसुभागे मध्ये ब्राह्मं ततः परं दैवम्  ६१

मानुषमथ पैशाचं क्रमशः सङ्कल्प्य युक्त्या तु
दैविकमानुषभागे विप्राणां स्याद् गृहश्रेणी  ६२

कर्मोपजीविनां स्यात् पैशाचे त्र वा द्विजावासम्
तस्मिन् सुरगणभवनं क्रमशः प्रागादिषु स्थाप्यम्  ६३

एतस्याभ्यन्तरे विप्रदेवतास्थापनं भवेत्
शिवहर्म्यं च ग्रामाणां समं बाह्येऽथवा भवेत्  ६४

भृङ्गराजांशके वाऽपि पावके तु विनायकम्
ऐशांशे शिवहर्म्यं स्यात् सौम्ये वानान्तरेषु वा  ६५

बाह्येऽस्य तु गृहश्रेणी मानेन विधिना कुरु
शैवानां परिवाराणां प्रोक्तं स्थानमिहोच्यते  ६६

सूर्यपदे सौरं स्यादग्निपदे कालिकावेश्म
भृशभागे विष्णुगृहं याम्यायां षण्मुखस्थानम्  ६७

भृशभागे मृगांशे तु नैर्ऋत्यां केशवालयम्
सुग्रीवांशे गणाध्यक्षः पुष्पदन्तपदेऽपि वा  ६८

आर्यकभवनं निर्ऋते वरुणे विष्णोर्विमानं स्यात्
स्थानकमासनशयनं धाम्न्येतस्मिन् क्रमेण चोर्ध्वतलात्  ६९

अथवा मूलतलं घनमुपरितले स्थानकं प्रोक्तम्
सुगतालयमथ सुगले भृङ्गनृपे चैव जिनधाम ७०

मदिरालयमथ वायौ मुख्ये कात्यायनीवासः
सोमे धनदगृहं वा मातृणामालयं तत्र ७१

ईशे शङ्करभवनं पर्जन्यांशे जयन्ते वा
सोमे धनदगृहं वा शोषपदे वा विधातव्यम् ७२

तत्र गजाननभवनं ह्यदितौ वा मातृकोष्ठं स्यात्
मध्ये विष्णोर्धिष्ण्यं तत्र सभामण्डपं प्रोक्तम् ७३

ब्रह्मस्थानैशाने वाग्नेय्यां वा सभास्थानम्
तदुदक्पश्चिमभागे हरिसदनं दक्षिणे परतः ७४

क्रूरसमेतं कर्म प्रत्ययमथ पञ्च मध्ये तु
युग्मायुग्मपदे च ब्रह्मस्थानेऽष्टनवभागे ७५

व्यपनीयाजं भागं प्रागादिषु दिक्षु च क्रमशः
नलिनकभवनं स्वस्तिकनन्द्यावर्तौ प्रलीनकं चैव ७६

यच्छ्रीप्रतिष्ठिताख्यं चतुर्मुखहर्म्यं तु पद्मसमम्
विष्णुच्छन्दविमानं त्रितलादिद्वादशतलान्तम् ७७

बहिरप्येवं सौधं ग्रामादिषु तत्र विज्ञेयम्
स्थितमासीनं शयनं यत्र यदिष्टं तु तत्र तत् स्थाप्यम् ७८

उत्कृष्टमध्यमाधमनीचादिकं क्रमेणैवम्
भवनं ग्रामेषूदितमिति नीचं चोत्तमे न स्यात् ७९

क्षुद्रे क्षुद्रविमानं यद्यत्रैवोचितं विधातव्यम्

त्रिचतुष्पञ्चतलं तद्धीने हीने च सामान्यम्  ८०

ग्रामे वा नगरे वोत्कृष्टे देवालयं तु नीचं चेत्
नीचा भवन्ति पुरुषाः स्त्रियोऽपि दुःशीलतां यान्ति  ८१

तस्मात् सममधिकं वा तत्संख्येव प्रयोक्तव्या
हरिंहरसदनं वास्तुकमन्यत् सर्वं यथेष्टं स्यात्  ८२

चण्डेश्वरः कुमारो धनदः काली च पूतना चैव
कालीसुतश्च खड्गी चैते दौवारिकाः प्रोक्ताः  ८३

प्राक्प्रत्यङ्मुखवशं ग्रामादिषु तत्पराङ्मुखं शुभदम्
विष्णुगृहं सर्वमुखं ग्रामस्यान्तर्मुखं शुभदम्  ८४

शेषं पूर्वाभिमुखं मातृणामुत्तराभिमुखम्
प्रत्यग्द्वारं सौरं गेहारम्भात् पुरामरावासम्  ८५

हृदये वंशस्थाने शूले सूत्रे च सन्धौ च
कर्णसिरायां षट्के नोक्तान्यमरालयादीनि  ८६

गोशाला दक्षिणतश्चोत्तरदेशे तु पुष्पवाटी स्यात्
पूर्वद्वारोपान्ते पश्चिमतस्तापसावासम्  ८७

सर्वत्रैव जलाशयमिष्टं वापी च कूपं च
वैश्यानां दक्षिणतः परितः सदनं तु शूद्राणाम्  ८८

प्राच्यां वाऽप्युत्तरतो गेहं कुर्यात् कुलालानाम्
तत्रैव नापितानामन्यत्कर्मोपयुक्तानाम्  ८९

मत्स्योपजीविनां स्याद् वासं वायव्यदेशे तु
पश्चिमदेशे मांसैरुपवृत्तीनां निवासः स्यात्  ९०

तैलोपजीविनां चैवोत्तरदेशे गृहश्रेणिः
धनुभिस्त्रिपञ्चसप्तभिरथ नवभिर्गृहावधिः प्रोक्तः ९१

दण्डाभ्यामथ तस्मादायामं वर्धयेत् क्रमशः
व्यासद्विगुणावधिकं यावद् दैर्घ्यं ग्रहीतव्यम् ९२

तत्रैव हस्तमानैर्गेहं कुर्याद् यथाविधिना
रुचकः स्वस्तिकमथवा नन्द्यावर्तं च सर्वतोभद्रम् ९३

स्याद् वर्धमानमेषामाकृत्या तच्चतुर्गृहं प्रोक्तम्
दण्डकशालालाङ्गलमथवा शूर्पं यथेष्टं स्यात् ९४

ग्रामात् किञ्चिद्दूरे पावकदेशेऽथवा वायौ
वासः स्यात् स्थपतीनां शेषाणां तत्र कर्तव्यम् ९५

तस्मात् किञ्चिद्दूरे रजकादीनां निवासः स्यात्
चण्डालकुटीराणि पूर्वायां क्रोशमात्रे तु ९६

चण्डालयोषितस्तास्ताम्रायः सीसभूषणाः सर्वाः
पूर्वाह्ने मलमोक्षक्रियोचिता ग्राममावेश्य ९७

सूर्यपदे सौरं स्यादग्निपदे कालिकावेश्म
भृशभागे विष्णुगृहं याम्यायां षण्मुखस्थानम् ९८

९८चण्डालचर्मकार श्मशानतोयाशयापयानं च
देवगृहविश्वकोष्ठग्रामावृतदेशमार्गपरिवृत्तिः ९९

व्यसनं ग्रामविनाशो नृपभङ्गो भवति मरणं च
देवालयान्तरापणशून्यत्वं शोध्यसञ्चयं चापि १००

मार्गेऽशुद्धक्षेपणमीदृग् ग्रामस्य शून्यतादायि

ग्रामादीनां च सर्वेषां गर्भविन्यासमुच्यते १०१

सगर्भं सर्वसम्पत्त्यै विगर्भं सर्वनाशनम्
तस्मात् सर्वप्रयत्नेन गर्भं सम्यग् विनिक्षिपेत् १०२

मृत्कन्दधान्यसल्लोह धातुरत्नेन्द्रनीलाद्यैः
पणेन गर्भद्रव्याणि निर्दोषाण्येव सङ्गृहेत् १०३

सलिलापूरिते श्वभ्रे मृदादीनि न्यसेद् बुधः
धान्योपरि निधातव्यं ताम्रभाजनमभ्रमम् १०४

ताम्रभाजनविस्तारं पञ्चधा परिकीर्तितम्
रत्निद्वादशपङ्क्त्यष्टचतुरङ्गुलमानतः १०५

उन्नतं तावदेवं स्याद् वृत्तं स्याच्चतुरश्रकम्
सपञ्चपञ्चकोष्ठं वा नवकोष्ठकमेव वा १०६

उपपीठपदे देवास्तस्मिन् पात्रे तु सम्मताः
रजतेन वृषः सूर्ये वज्री हाटकनिर्मितः १०७

यमे तु यमराजश्च शुल्बेनायसवारणः
हैमः सिंहस्तु रूप्येण वरुणे सजलाधिपः १०८

वाजी श्वेतमयः सोमे राजतो द्विजराजकः
ईशे वैकृन्तमनले त्रपु सीसं तु नैरृते १०९

स्वर्णं समीरणे जातिहिङ्गुल्यं तु जयन्तके
हरितालं भृशे भागे वितथे तु मनःशिला ११०

माक्षिकं भृङ्गराजे स्याद् राजावर्तं सुकन्धरे
गैरिकं शोषभागे तु गणमुख्येऽञ्जनं भवेत् १११

अदितौ दरदं विद्यादेवमेव न्यसेत् क्रमात्
चतुष्पदे च लोकेशाः स्थाप्याश्चाभ्यन्तराननाः ११२

षड्भिः पञ्चचतुस्त्रिद्विमात्रे बिम्बोदयं भवेत्
तदर्धं वाहनोत्सेधं स्थानकासनमेव वा ११३

मुक्तापवत्से मरिचौ विद्रुमं सवितर्यथ
पुष्परागं च वैडूर्यं विवस्वति विनिक्षिपेत् ११४

वज्रमिन्द्रजये विद्यादिन्द्रनीलं तु मित्रके
रुद्रराजे महानीलं मरकतं तु महीधरे ११५

मध्यमे पद्मरागं तु विन्यसेद् गर्भभाजने
रत्नानि धातवश्चैव स्वस्वविस्तारभाजने ११६

तद्देवस्थान्बभावज्ञैरानीतानि निधापयेत्
हेमायस्ताम्ररूप्यैश्च स्वस्तिकानि चतुर्दिशि ११७

ब्रह्मस्थानाद् बहिष्ठानि पूर्वादौ स्थापयेत् क्रमात्
स्वर्णेन शालिं रूप्येण व्रीहिं चायस्कोद्रवम् ११८

त्रपुकङ्कु सीसमाषं तिलं वैकृन्तकल्पितम्
मुद्गं चायोमयं ताम्रं कुलत्थमिति लोहजान् ११९

भाजनाय बलिं दत्त्वा पश्चात् सर्वं निधापयेत्
अङ्गुलाधिकविस्तीर्णमायामं द्वादशाङ्गुलम् १२०

पञ्चाङ्गुलेन वृद्धिः स्यादाद्वात्रिंशत्प्रमाणतः
खादिरं चेन्द्रकीलं स्यात् तस्याग्रं चित्रवृत्तकम् १२१

भाजनोपरि तत् स्थाप्यं गर्भन्यासविचक्षणैः

स्थानीये द्रोणमुखे खार्वटे प्रतिनागरे १२२

ग्रामे च निगमे खेटे पत्तने कोत्मकोलके
ब्रह्मण्यार्यार्किभागेऽपि विवस्वति यमे तथा १२३

मित्रे च वरुणे चैव सोमे च पृथिवीधरे
द्वारदक्षिणदेशे वा ह्येतेषां गर्भ इष्यते १२४

पुष्पदन्ते च भल्लाटे महेन्द्रे च गृहक्षते
विष्णुस्थाने श्रियः स्थाने स्कन्दस्थानेऽथवा पुनः १२५

स्थापयेद् ग्रामरक्षार्थं सर्वकामाभिवृद्धये
गर्भमादौ विनिक्षिप्य बिम्बं तदुपरि न्यसेत् १२६

शिलेष्टकचिते खाते पुरुषाञ्जलिमात्रके
अनुक्तानां च सर्वेषामजभागादिषु न्यसेत् १२७

सुरक्षं तु यथागर्भं स्थपतिः स्थापयेत् स्थिरम्
अत्रानुक्तं तु तत् सर्वं द्रष्टव्यं गर्भलक्षणे १२८

एव प्रोक्ता भूमितिर्दैवतानां वर्णानां चाप्यत्र जात्यन्तराणाम्
ग्रामादीनां मानविन्यासमार्गं सालङ्कारं चारु संक्षिप्य तन्त्रात् १२९

दद्यान्नृपः स्थपतिकादिचतुष्टयेभ्यो मानादिकर्मनिपुणेभ्य इडां च गां च
नित्यं यथा जगति वित्तमनेकवस्तून्याचन्द्रतारमधिवासभुवं मुदा सः
१३०

इति मयमते वस्तुशास्त्रे ग्रामविन्यासो नाम नवमोऽध्यायः

## अथ दशमोऽध्यायः

नगरादीनां मानं विन्यासं च क्रमादहं वक्ष्ये
आद्यं धनुषां त्रिशतं तस्माच्छतदण्डवर्धनादुपरि १

साष्टकसप्ततिभेदाश्चाष्टसहस्रान्तकं यावत्
नग्राणां विपुलं हि प्रोक्तं पूर्वोक्तमानेन २

शतदण्डादिदशद्धर्या त्रिःसप्तत्रिशतदण्डान्तम्
क्षुद्राणामिदमुदितं नगराणामेव सर्वेषाम् ३

उत्कृष्टपुरपरिधिर्नृपतेर्यष्टिद्विरष्टसाहस्रैः
चातुःसहस्रकान्तं पञ्चशतोनाद्धि पञ्चपञ्चधा मानम् ४

त्रिशतादिचतुःशतकं यावद् वृद्ध्या तु विंशतिभिः
षड्विधमुक्तं खेटं श्रेष्ठे मध्ये परे विपुलम् ५

तस्मात्त्रिरष्टवृद्ध्या द्रोणमुखे पञ्चधा मानम्
षण्णवतिचतुःशतकं यावत् तावत्तु विस्तारम् ६

द्विशतादि चतुःशतकं यावत् पञ्चाशदभिवृद्ध्या
पञ्चप्रमाणमेवं खर्वटविस्तार उद्दिष्टः ७

द्विशतादिपङ्क्तिवृद्ध्या चत्वारिशत्त्रिशतदण्डं स्यात्
यावन्निगमे विपुलाः प्रोक्तास्त्रिः पञ्चभेदाश्च ८

शतदण्डे शतवृद्ध्या पञ्चशतं यावदुद्दिष्टम्
स्यात् कोत्मकोलकानां विपुलं पञ्चैव भेदेन ९

तावन्मानं प्रोक्तं पुरविपुले सूरिभिः प्राज्ञैः
यावत् पञ्चशतान्तं त्रिशतादारभ्य सप्तधा मानम् १०

पञ्चाशद्धनुवृद्ध्या विपुलं कथितं विडम्बस्य
प्रागुपदिष्टं मानं ह्येतन्मानं तु वैतेषाम् ११

द्विगुणं त्रिपादमर्धं पादं तेषां मुखायतं विपुलात्

विपुले तु षडष्टांशे भागेनैकेन वायतं पुरतः १२

चतुरश्रमायताश्रं वृत्तं वृत्तायतं च पुनः
स्याद् गोलवृत्तमेवं वप्राकारास्तु पञ्चैव १३

पङ्क्त्यष्टसप्तपञ्चक चतुरंशैस्तत् कृते विपुले
मुनिरसशरयुगशिखिभिर्भागैर्वप्रावधिः प्रोक्तः १४

द्वित्रिचतुर्हस्तं स्याद् विपुलं सालस्य तुङ्गे तु
सप्तदशैकादशभिर्हस्तैरग्रं त्र्यंशोनम् १५

परितः परिखा बाह्येऽबाह्ये देवालयादीनि
पेचकभागाद्यासनभागान्तं चण्डितं प्रोक्तम् १६

सूत्रादीन्यथ विषमस्थानानि च वर्जयेन्मतिमान्
प्रागुदगग्रं मार्गं तत्र यथेष्टं न्यसेद् विधिना १७

दण्डादिसप्तदण्डं यावद् दण्डार्धवृद्ध्या तु
मार्गविशालाश्चैते त्रयोदशभेदाः समुद्दिष्टाः १८

राष्ट्रस्य मध्यभागे सज्जनबहुले नदीसमीपे च
नगरं केवलमथवा राजगृहोपेतराजधानी वा १९

दिक्षु चतुर्द्वारयुतं गोपुरयुक्तं तु सालाढ्यम्
क्रयविक्रयकैर्युक्तं सर्वजनावाससङ्कीर्णम् २०

सर्वसुरालयसहितं नगरमिदं केवलं प्रोक्तम्
प्रत्यगुदग्दिशि गहना परितः साला बहिः सपांसुचया २१

परितः परिखा बाह्ये शिबिरयुतानेकमुखरक्षा
पूर्वायां दक्षिणतश्चाभिमुखा राजबलयुक्ता २२

उन्नतगोपुरयुक्ता नानाविधमालिकोपेता
सर्वसुरालयसहिता नानागणिकान्विता बहूद्याना  २३

हस्त्यश्वरथपदातिबहुमुख्या सर्वजनयुक्ता
द्वारोपद्वारयुताभ्यन्तरतोऽनेकजनवासा  २४

या नृपवेश्मसमेता सा कथिता राजधानीति
काननवनदेशे वा सर्वजनावाससङ्कीर्णम्  २५

क्रयविक्रयकैर्युक्तं पुरमुदितं यत् तदेव नगरमिति
शूद्रैरधिष्ठितं यन्नद्यचलावेष्टितं तु तत् खेटम्  २६

परितः पर्वतयुक्तं खर्वटकं सर्वजनसहितम्
खर्वटखेटकमध्ये यज्जनताढ्यं जनस्थानकुब्जम्  २७

द्वीपान्तरागतवस्तुभिरभियुक्तं सर्वजनसहितम्
क्रयविक्रयकैर्युक्तं रत्नधनक्षौमगन्धवस्त्वाढ्यम्  २८

सागरवेलाभ्याशे तदनुगतायामि पत्तनं प्रोक्तम्
परनृपदेशसमीपे युद्धारम्भक्रियोपेतम्  २९

सेनासेनापतियुतमिदमुदितं शिबिरमिति च वरैः
सर्वजनैः सङ्कीर्णं नृपभवनयुतं तदेव तथा  ३०

बहुरक्षोपेतं यत् सेनामुखमुच्यते तज्ज्ञैः
नद्यद्रिपार्श्वयुक्तं नृपभवनयुतं सबहुरक्षम्  ३१

यन्नृपतिस्थापितकं तत् स्थानीयं समुद्दिष्टम्
नद्यब्धिदक्षिणादक्षिणभाग् वणिगादिसंयुक्तम्  ३२

सर्वजनावासं यद् द्रोणमुखं प्रोक्तमाचार्यैः

ग्रामसमीपे जनतालयमिदमुदितं विडम्बमिति ३३

वनमध्ये जनवासं यत् कोत्मकोलकं प्रोक्तम्
चातुर्वर्ण्यसमेतं सर्वजनावाससङ्कीर्णम् ३४

बहुकर्मकारयुक्तं यन्निगमं तत् समुद्दिष्टम्
नद्यद्रिवनसमेतं बहुजनयुक्तं सनृपवासम् ३५

एतत् स्कन्धावारं तत्पार्श्वे चेरिका प्रोक्ता
गिरिवनजल पङ्केरिणदैवतमिश्राणि सप्त दुर्गाणि ३६

गिरिमध्यं गिरिपार्श्वं गिरिशिक्खरं पार्वतं दुर्गम्
अजलं तरुवनगहनं वनदुर्गं तदुभयं तु मिश्रं स्यात् ३७

दैवं तु सहजदुर्गं पङ्कयुतं पङ्कदुर्गं स्यात्
नद्यब्धिपरिवृतं यज्जलदुर्गं निर्वनोदमिरिणं स्यात् ३८

अक्षयजलान्नशस्त्रं ह्यतिविपुलोत्तुङ्गघनसालम्
सर्वं हि दुर्गजातं सप्राकारं त्वनेकमुखरक्षम् ३९

बहिरुदकरहितवनच्छन्नपथं दुष्प्रवेशं च
गोपुरमण्डपयुक्तं सोपानच्छन्नमच्छन्नम् ४०

द्विकवाटचतुष्परिघार्गल हस्तोन्नतेन्द्रकीलयुतम्
सस्थूणमध्यमालयमिण्ठकसहितं सगूढसोपानम् ४१

द्वारणि मण्डपसभाशालाकाराणि कार्याणि
द्वादश सालाकाराश्चतुरं वृत्तं तदायतं च पुनः ४२

नन्द्यावर्तं कौक्कुटमिभकुम्भं नागवृत्तं च
मग्नचतुरं त्रिकोणमष्टाश्रं नेमिखण्डं च ४३

प्राकाराश्चेष्टकया द्वादशहस्तोच्छ्रिताहीनाः
उत्सेधार्धविशाला मूले भित्तिः ससञ्चारा ४४

सालस्याभ्यन्तरतः पांसुचयोपर्यनेकयन्त्रयुतम्
परितः परिखोपेतं पांसुचये संहताट्टालम् ४५

परितः शिबिरोपेतं नानाजनवाससङ्कीर्णम्
नृपभवनसमोपेतं हस्त्यश्वरथपदातिबहुमुख्यम् ४६

धान्यैस्तैलैः क्षारैः सलवणभैषज्यगन्धविषम्
लोहाङ्गारस्नायुविषाणवेणिवन्धनैर्युक्तम् ४७

तृणचर्मशाकयुक्तं सवल्कलं सारदारुयुतम्
दुर्गं दुर्गममुक्तं दुर्लङ्घ्यं दुरवगाहं च ४८

रक्षार्थम् च जयार्थं ह्यरिभिरभेद्यं च दुर्गमिष्टं स्यात्
इन्द्रश्च वासुदेवो गुहो जयन्तश्च वैश्रवणः ४९

अश्विन्यौ श्रीमदिरे शिवश्च दुर्गा सरस्वती चेति
प्राकारान्तर्दिव्या दुर्गनिवेशे च विज्ञेयाः ५०

एवं दुर्गविधानं सम्यक् प्रोक्तं पुरातनैर्मुनिभिः
सर्वेषां विन्यासं संक्षेपाद् वक्ष्यते क्रमशः ५१

प्राक्प्रत्यग्गतमार्गा द्वादश दश वाऽष्ट षट्चतुर्युगलम्
तावदुदीचीनास्ते तत्रैवायुग्मसंख्या वा ५२

एकादशनवसप्त कपञ्चगुणा कमार्गा वा
युग्मायुग्मपदेषु द्व्येकत्रिभिरंशकैरजांशाः स्युः ५३

नगरादीनामेवं मार्गाण्युदितानि सर्वेषाम्

दण्डवदेका वीथी तद्दण्डकमित्यभीष्टं स्यात्  ५४

उत्तरदिङ्मुखमेकं तन्मध्ये संप्रयुक्तं चेत्
कर्तरिदण्डकमुदितं प्राचीनौ कुट्टिमौ तर्हि  ५५

तद्बाहुदण्डकं स्याद्दिक्षु चतुर्द्वारसंयुक्तम्
बहुकुट्टिमसंयुक्तं मध्ये वीथ्या द्विपार्श्वे तु  ५६

शेषं पूर्ववदिष्टं कुटिकामुखदण्डकं प्रोक्तम्
प्राचीनोदीचीनैर्मार्गैस्त्रिभिरेव संयुक्तम्  ५७

तत् कलकाबन्धदण्डकमिति तज्ज्ञैः समुद्दिष्टम्
प्राङ्मुखवीथ्यस्तिस्त्रश्चोत्तरमार्गास्त्रयश्चैव  ५८

एकैकान्तरितास्ते कुट्टिममार्गास्त्वनेकाश्च
वेदीभद्रकमुदितं नगरादीनामिदं शस्तम्  ५९

स्वस्तिकमुदितं ग्रामे यथा तथा स्वस्तिकं विद्यात्
प्रागुत्तरमुखमार्गाः षट्षडभीष्टास्तु तद्बाह्ये  ६०

प्रागिव मार्गोपेतं वीथिपदं स्वस्तिकं चैव
प्राचीनोदीचीनाश्चत्वारश्चैव मार्गाः स्युः  ६१

ब्रह्मावृतपथमेकं कुट्टिममार्गास्त्रयः प्राच्याम्
एतद् भद्रकमुदितं नाम्ना नगरादिविन्यासम्  ६२

प्राङ्मुखमार्गाः पञ्चैवोत्तरमार्गास्तथैव स्युः
बहुकुट्टिमसंयुक्तं भद्रमुखं नाम वस्तु स्यात्  ६३

प्राचीनास्तु षडेवैवोत्तरवक्त्रास्तथा मार्गाः
यद् बहुकुट्टिमयुक्तं तद्वस्तु च भद्रकल्याणम्  ६४

पूर्वापरमुखमार्गाः सप्तैवोदङ्मुखाश्च तथा
शेषं प्रागिव सर्वं विन्यासं त्वमहाभद्रम् ६५

अष्टौ पूर्वमुखास्ते मार्गाश्चाष्टावुदग्वक्त्राः
द्वादशमार्गोपेतं बह्वर्गलकुट्टिमैर्युक्तम् ६६

यत् तद् वस्तुसुभद्रं नाम्ना विन्यासमुद्दिष्टम्
नवनवमार्गाश्चैते प्राचीनाश्चाप्युदीचीनाः ६७

द्वारोपद्वारयुतं कुट्टिममार्गार्गलैर्युक्तम्
राजगृहोपेतं यन्नगरं नाम्ना जयाङ्गं स्यात् ६८

प्राचीना दश मार्गाश्चोत्तरमार्गास्तथैव स्युः
नृपमन्दिरसंयुक्तं युक्त्यानेकार्गलोपेतम् ६९

बहुकुट्टिमसंयुक्तं विजयं नाम्ना वरैः प्रोक्तम्
प्राचीनास्त्वेकादश मार्गा रुद्रा उदीचीनाः ७०

रक्षांशादपरांशो यदभीष्टं तत्र नृपवासम्
तन्मुखतोऽदभ्रमहाङ्गणकं स्यादिष्टभगे तु ७१

तत्रान्तःपुरवासं शेषं सर्वं समुन्नेयम्
तत्प्रागुद्गतमार्गा सा कथिता राजवीथीति ७२

तस्या द्विपार्श्वयोः स्यात् सैश्वर्याणां तु मालिकापङ्क्तिः
तत्पार्श्वयोर्निवासो वणिजां स्यात् तस्य दक्षिणतः ७३

स्यात् तन्तुवायवासं ह्युत्तरतश्चक्रिणां वासम्
तत्तज्जात्यन्तरगृहमथ तत्सामीप्यतः कुर्यात् ७४

शेषं प्रागिव सर्वं योग्यं तत् सर्वतोभद्रम्

एवं षोडश भेदा ह्युदिताश्चाद्यैर्मुनीन्द्रैस्तु ७५

मार्गच्छेदं नेष्टं पदमध्ये चत्वरं न स्यात्
शेषं युक्त्यानुक्तं सम्यग् योज्यं नृपेच्छया तज्ज्ञैः ७६

क्षुद्राणामपि चैषां मध्यानां चापि सर्वेषाम्
तत्र कुटुम्बावलिकं वक्ष्येऽहं चान्तरापणकम् ७७

परितो रथपथयुक्तं मध्ये वणिजां गृहश्रेणी
तद्दक्षिणतः पार्श्वे गेहं स्यात् तन्तुवायानाम् ७८

उत्तरतस्तद्वासावलिकं स्याच्चक्रिकाणां तु
कर्मोपजीविनां स्याद् वासं रथपथ्यनेकानाम् ७९

ब्रह्मावृतपथमेकं तत्रान्तरापणं कार्यम्
ताम्बूलादि फलं च प्रोक्तं सारान्वितं द्रव्यम् ८०

ईशानादिमहेन्द्रद्वारान्तं चान्तरापणकम्
तत्रैव मत्स्यमांसं शुष्कं शाकं च विज्ञेयम् ८१

महेन्द्राद्यग्न्यन्तं भक्ष्यं भोज्यं च निर्दिष्टम्
अग्न्यादि गृहक्षतपर्यन्तं तत्र भाण्डानि ८२

तस्मान्निर्ऋतिपदान्तं कंसादिकमत्र विज्ञेयम्
स्यात् पुष्पदन्तभागान्तं पितृभागादि वस्त्रं स्यात् ८३

तस्मात् समीरणान्तं तण्डुलधान्यादिकं च कटम्
स्याद् भल्लाटपदान्तं वाय्वादि कं वस्त्रकादीनाम् ८४

तत्रैव लावणादिद्रव्यं तैलादिकं ज्ञेयम्
तस्मादीशपदान्तं गन्धं पुष्पादिकं विहितम् ८५

एवं नवान्तरापणमुदितं तत्परितस्तु मध्ये
अभ्यन्तरगतमार्गेष्वथ रत्नं हाटकं वस्त्रम्  ८६

माञ्जिष्ठं तु मरीचं पिप्पलकं चापि हारिद्रम्
मधुघृततैलादिकमथ भैषज्यं सर्वतः कार्यम्  ८७

आर्यपदे च विवस्वति मित्रे पृथिवीधरे च पदे
शास्ता दुर्गा रजमुखलक्ष्म्यौ चात्रैव विज्ञेयाः  ८८

देवालयमथ परितो ग्रामे यथा तथा विहितम्
परितः सर्वजनालयमुदितं किञ्चित् ततो दूरे  ८९

नगराद् द्विशतं दण्डं नीत्वा प्राच्यां तु वाग्नेय्याम्
चण्डालकुटीराणि तत्रैव तु कोलिकानां तु  ९०

अस्मिन् सर्वमनुक्तं ग्रामे तु यथा तथा विहितम्
पत्तनमृजुवीथियुतं नैव स्यादन्तरापणं तत्र  ९१

शेषाणामपि तत्तद्योग्यवशात् तत्र विज्ञेयम्  ९२

स्थानीयदुर्गपुरपत्तनकोत्मकोलद्रोणामुखानि निगमं च तथैव खेटम्
ग्रामं च खर्वटमितीह दशैव युक्त्याधिष्ठानकानि कथितानि पुरातनार्यैः
९३

एवं प्रोक्तं भूमिदेवादिकानां वर्णानां चाप्यत्र जात्यन्तराणाम्
ग्रामादीनां मानविन्यासमार्गं सालङ्कारं चारु संक्षिप्य तन्त्रात्  ९४

दत्तान्नृपः स्थपतिकादिचतुष्टयेभ्यो मानादिकर्मनिपुणेभ्य इडां च गाश्च
नित्यं यथा जगति वित्तमनेकवस्तून्या चन्द्रतारमधिवासभुवं मुदा सः
९५

इति मयमते वस्तुशास्त्रे नगरविधानो नाम दशमोऽध्यायः

## अथैकादशोऽध्यायः

भूमिलम्बविधानं तु वक्ष्ये संक्षेपतः क्रमात्
चतुरश्रमायताश्रम् वर्तुलं च तदायतम् १

अष्टाश्रम् च षडश्रं च द्व्यश्रवृत्तं तथैव च
एतद् विन्यासभेदं स्यात् क्षयवृद्धिविधानतः २

भूमिलम्भमिति प्रोक्तं त्रिचतुर्हस्तमानतः
द्विद्विहस्तविवृद्ध्यैकं भूमेर्मानं चतुष्टयम् ३

पञ्चषड्ढस्तमारभ्य द्विद्विहस्तविवर्धनात्
द्वितले तु चतुर्मानं रुद्रभानुकरान्तकम् ४

सप्ताष्टहस्तमारभ्य द्विद्विहस्तविवर्धनात्
पञ्चदशविकारान्तं त्रितले पञ्चमानकम् ५

नवपङ्क्तिकराद् यावत् पक्षषोडशहस्तकम्
चतुष्पञ्चतलं प्रोक्तं चतुर्मानं सनातनम् ६

एकहस्तं द्विहस्तं वा क्षुद्रमेकतलं स्मृतम्
युग्मायुग्मकरैर्मानैर्हस्तार्धोनसमन्वितैः ७

केचिद् वदन्ति देवानां मानुषाणां विमानके
विस्तारे सप्तषट्पञ्चचतुस्त्र्यंशेऽधिकं त्रिभिः ८

शान्तिकं पौष्टिकं जयदमद्भुतं सार्वकामिकम्
उच्छ्रायं द्विगुणं पादार्धाधिकं चापि सम्मतम् ९

पञ्चदशकर व्यासाद्धीनं क्षुद्रविमानकम्
सप्ताष्टाधिकपङ्क्त्यादि द्विद्विहस्तविवर्धनात् १०

आसप्ततेश्चतुर्भूम्यादीनि त्रीणि मतानि च
सप्तविंशतिभेदानि द्वादशान्तान्यनुक्रमात् ११

त्रिचतुर्विंशतिरलेर्यावच्छतकरान्तकम्
त्रित्रिहस्तविवृद्ध्या तु त्रिनवोत्सेधमिष्यते १२

एवमुत्कृष्टमानेषु श्रेष्ठमध्याधमं भवेत्
त्रिचतुष्पङ्क्तिहस्तादि द्विद्विहस्तविवर्धनात् १३

पञ्चषट्षष्टिहस्तान्तं संख्यया पूर्वसंस्कृतिः
चतुस्तलविमानादि द्वादशान्तं विधीयते १४

सप्ताष्टपङ्क्तेरारभ्य त्रित्रिहस्तविवर्धनात्
पञ्चषरणवतिर्यावदुच्चं प्रागिव संख्यया १५

श्रेष्ठमध्यकनिष्ठं स्यादेवं मध्यक्रमेषु च
नवपङ्क्तिकरात् पञ्चषट्पञ्चाशत्करान्तकम् १६

द्विद्विहस्तविवृद्ध्या तु चतुर्विंशतिसंख्यया
पञ्चादिद्वादशान्तानां हर्म्याणां विपुलं क्रमात् १७

सप्ताष्टनवभूमानां धाम्नामुक्तप्रमाणतः
युञ्ज्याद् द्वादशभूम्यन्तं विमानं मानविद्वरः १८

द्विःषट् त्रयोदशद्मान्तषोडशद्मं यथाक्रमम्
षट्षट्षट्सप्तपञ्चाशद्धस्तव्यासैः शिवोदितम् १९

विस्तारं स्तम्भतो बाह्ये जन्मात् स्थूप्यन्तमुन्नतम्
केचिदाशिखरान्तं तु प्रवदन्ति तदुन्नतम् २०

महतामुच्छ्रयो हस्तैरुद्देशः समुदाहृतः

तत्तद्व्यासे तु सम्तांशे निर्देशोच्चं त्रियंशकैः  २१

विस्तारद्विगुणोत्सेधं युक्त्याल्पेषु प्रयोजयेत्
देवानां सार्वभौमानामाद्वादशतलं विदुः  २२

रक्षोगन्धर्वयक्षाणामेकादशतलं मतम्
विप्राणां नवभौमं स्याद् दशभौममथापि वा  २३

युवराजस्य राज्ञश्च पञ्चमस्यैव सप्तभूः
तदाद्येकादशतलं षराणां वै चक्रवर्तिनाम्  २४

त्रिभूमं च चतुर्भूमं वणिजां शूद्रजन्मनाम्
राज्ञां पञ्चतलं वाऽपि मतं पट्टभृतां तु तत्  २५

शतहस्तसमुत्सेधात् सप्तत्यारत्निविस्तरात्
नेष्यतेऽधिकमानं तु सर्वथा तद्विचक्षणैः  २६

क्षुद्राल्पमध्यमवरादिविमानकानां व्यामिश्रहस्तकयुजां विपुलोच्चभेदम्
युक्त्या यथोदितमजाद्यमरेश्वराणां नृणां तथैव कथितं हि मया पुराणैः
२७

इति मयमते वस्तुशास्त्रे भूलम्बविधानो नाम एकादशोऽध्यायः

## अथ द्वादशोऽध्यायः

तैतिलानां द्विजातीनां वर्णानां हर्म्यके गृहे
गर्भन्यासविधिः सम्यक् संक्षेपाद् वक्ष्यतेऽधुना  १

सर्वद्रव्यैस्तु सम्पन्नं गर्भं तत् सम्पदां पदम्
द्रव्यहीनमसम्पन्नं गर्भं सर्वविपत्करम्  २

तस्मत् सर्वप्रयत्नेन गर्भं सम्यग् विनिक्षिपेत्
गर्भश्वभ्रस्य गाम्भीर्यं स्वाधिष्ठानोन्नते समम्  ३

चतुरश्रसमं कुर्यात् गर्तमिष्टकयाश्मना
आपूर्य सलिलं तस्य मूले सर्वमृदं क्षिपेत् ४

निम्नगाह्रद सस्याद्रिवल्मीक कुलिरावटे
हलस्थलाब्धिगोशृङ्गहस्तिदन्तेषु मृत्तिका ५

तदूर्ध्वं तस्य मध्ये तु पद्मकन्दं न्यसेत् पुनः
पूर्वे चोत्पलकन्दं च दक्षिणे कौमुदं क्षिपेत् ६

सौगन्धिं पश्चिमे विद्यात् नीललोहमुदग्दिशि
धान्यान्यष्टौ तदूर्ध्वं तु शालिर्व्रीहिश्च कोद्रवः ७

कङ्कु मुद्गं च माषं च कुलत्थं च तिलं तथा
प्रादक्षिण्येन शाल्यादीनीशानादिषु विन्यसेत् ८

तस्योपरि निधातव्यं मञ्जूषं ताम्रनिर्मितम्
त्रिचतुर्मात्रविस्ताराद् द्विद्व्यङ्गुलविवर्धनात् ९

पञ्चषड्विंशमात्रान्तं मानं द्वादश भाजने
समोच्चं वाऽष्टषट्पञ्चभागोनं वा तदुच्छ्रयम् १०

एकादिद्वादशान्तानां हर्म्याणामुदितं क्रमात्
गृहीतोच्चत्रिभागैकं पादालम्बिविधानकम् ११

तत्तद्धर्म्याङ्घ्रिविष्कम्भसमं वाष्टांशहीनकम्
त्रिपादं वा विशालं तत् फेलायाः प्रागिवोच्छ्रयम् १२

त्रिवर्गमण्डपाकारं वृत्तं वा चतुरश्रकम्
पञ्चविंशतिकोष्ठं वा नवकोष्ठकमेव वा १३

फेलोच्चार्धत्रिभागैकं कोष्ठभित्त्युच्छ्रयं भवेत्

तद्भित्तिघनतां कुर्याद् यवैर्द्वित्रिचतुष्टयैः १४

उपपीठपदे देवाः पञ्चविंशति सम्मताः
श्वभ्रोर्ध्वभूतलं सर्वं गन्धैः पुष्पैश्च दीपकैः १५

वासयित्वा तु पूर्वेद्युः पञ्चगव्यैस्तु भाजनम्
प्रक्षाल्य सूत्रैरावेष्ट्य शुद्धशाल्यास्तरे शुभे १६

स्थण्डिले चण्डितं कृत्वा मण्डूकं वाऽथ तत्परम्
विन्यस्य देवान् ब्रह्मादीन् श्वेततण्डुलधारया १७

आराध्य गन्धपुष्पाद्यैर्भुवनाधिपतिं जपेत्
स्थपतिः कलशान् न्यस्य सर्वान् वस्त्रविभूषितान् १८

सुगन्धोदकसम्पूर्णान् गन्धपुष्पसमर्चितान्
निष्कलङ्कानसुषिरान् पञ्चपञ्चैव सूत्रितान् १९

तस्य प्रदक्षिणे गन्धशालिस्थण्डिलमण्डले
आराध्य गन्धपुष्पाद्यैर्बलिं दत्त्वा यथाविधि २०

भाजनाय ततः पात्रं वेष्टयेच्छ्वेतवाससा
श्वेतवस्त्रास्तरस्योर्ध्वे न्यसेद् दर्भास्तरे शुचिः २१

पीत्वा शुद्धं पयो रात्रावुपोष्याधिवसेत् ततः
स्थपतिः शास्त्रवित् प्राज्ञः सूत्रग्राह्यादिसेवितः २२

धान्यादीन्यथ वस्तूनि भाजनाभ्यन्तरे न्यसेत्
हेमराजतशुल्बैश्च शालिव्रीहिकुलत्थकान् २३

त्रपुणा कङ्कु सीसेन माषो मुद्गोऽयसायसा
कोद्रवं च तिलं भाव्यं वैकृन्तेन प्रयत्नतः २४

ईशादिषु न्यसेदेतान्यष्टदिक्षु यथाक्रमम्
जयन्ते जातिहिङ्गुल्यं हरितालं भृशे मतम्  २५

मनःशिला च वितथे भृङ्गराजे तु माक्षिकम्
राजावर्तं तु सुग्रीवे शोषे गैरिकमीरितम्  २६

अञ्जनं गणमुख्ये स्यादुदितौ दरदं विदुः
मध्यमे पद्मरागं तु मरीचौ विद्रुमं मतम्  २७

सविन्द्रे पुष्परागं तु वैडूर्यं स्याद् विवस्वति
वज्रमिन्द्रजये विद्यादिन्द्रनीलं तु मित्रके  २८

रुद्रराजे महानीलं मरकतं मु महीधरे
मुक्तापवत्से मध्यादिपूर्वेण क्रमशो न्यसेत्  २९

विष्णुक्रान्ता त्रिशूला श्रीः सहा दूर्वा च भृङ्गकम्
अपामार्गैकपत्राब्जमीशादिष्वौषधान्यसेत्  ३०

चन्दनागरुकर्पूरलवङ्गैलालताफलम्
तक्कोलेनाष्टगन्धांस्तु जयन्तादिषु विन्यसेत्  ३१

स्वस्तिकानि चतुर्दिक्षु हेमायस्ताम्ररूप्यकैः
सर्वेषामपि सामान्यमेतच्चिह्नैस्तु लक्ष्यते  ३२

कपालशूलखट्वाङ्गं परशुं वृषभं तथा
पिनाकं हरिणं पाशं हैमं पूर्वादिषु न्यसेत्  ३३

कार्तस्वरमयं चाष्टमङ्गलं तत्र पूर्ववत्
दर्पणं पूर्णकुम्भं च वृषभं युग्मचामरम्  ३४

श्रीवत्सं स्वस्तिकं शङ्खं दीपं देवाष्टमङ्गलम्

स्थापकस्यानुशिष्यस्तान् स्थपतिः क्रमशो न्यसेत् ३५

आच्छाद्य भाजुअनं शुभ्रं पिधानेन तु निश्चलम्
तमेवाराध्य गन्धाद्यैः स्नापयेत् कलशोदकैः ३६

विप्रस्वाध्यायघोषैश्च शङ्खभेर्यादिनिःस्वनैः
कल्याणजयघोषैश्च स्थपतिः स्थापकेन तु ३७

पुष्पकुण्डलहारादिकटकैरङ्गुलीयकैः
पञ्चाङ्गभूषणैर्हेमनिर्मितैश्च विभूषणैः ३८

हेमयज्ञोपवीतस्तु नववस्त्रोत्तरीयकः
श्वेतानुलेपनश्चैव सितपुष्पशिराः शुचिः ३९

ध्यात्वा धरातलं सर्वं दिग्द्विपेन्द्रसमन्वितम्
ससागरं सशैलेन्द्रमनन्तस्योपरि स्थितम् ४०

सृष्टिस्थितिलयाधारं भुवनाधिपतिं जपेत्
ब्रह्मादीनां च देवानां देवीनां द्वारदक्षिणे ४१

स्तम्भमूले यथायोगं गर्ते गर्भं निधापयेत्
होमस्तम्भे प्रतिस्तम्भे पादुकाञ्च प्रतेरधः ४२

तस्मादत्युन्नतं निम्नं गर्भं सम्पद्विनाशकृत्
चतुरश्रीकृता सारवृक्षपाषाणनिर्मिता ४३

पात्रद्विगुणविस्तारा पञ्चाङ्गुलघनान्विता
प्रतिमाफलका या सा स्थाप्या तद्भाजनोपरि ४४

तदूर्ध्वे स्थापयेत स्तम्भं संश्लिष्टचतुरिष्टकम्
सरत्नौषधिभिर्युक्तं वस्त्रपुष्पादिशोभितम् ४५

ईशगर्भमिदं प्रोक्तमन्येषां तु प्रवक्ष्यते
विष्णुधिष्ण्ये च गर्भं स्याद्धैमं चक्रं तु मध्यमे ४६

शङ्खकार्मुकदण्डं च रुक्ममायसनन्दकम्
धनुः शङ्खं च वामे तु खड्गं दण्डं च दक्षिणे ४७

प्रमुखे वैनतेयं च स्थापयेद्धेमनिर्मितम्
यज्ञोपवीतमोङ्कारं स्वस्तिकाग्निं च हेमजम् ४८

पद्मं कंमण्डलुं चाक्षसूत्रदर्भाश्च ताम्रजाः
ब्रह्मासनपदे मध्येऽम्बुरुहं स्थाप्यमेव च ४९

तस्मिन्मध्ये तदोङ्कारं यज्ञसूत्रावृतं तु तत्
स्वस्तिकानि चतुर्दिक्षु वामे स्थाप्यं कमण्डलु ५०

कुशाक्षमालां वामे तु पुरस्तीक्ष्णानलं क्षिपेत्
ब्रह्मगर्भमिदं प्रोक्तं ब्रह्मस्थाने प्रतिष्ठितम् ५१

स्वस्तिकं चाक्षमालां च शक्तिं चक्रं च कुक्कुटम्
मयूरं चैव सौवर्णमयसा शक्तिमध्यमे ५२

वामे च कुक्कुटं दद्याद् दक्षिणे च मूयरकम्
अक्षसूत्रं पुरः स्थाप्यं गर्भं षण्मुखसद्मनि ५३

अम्बुजं चाङ्कुशं पाशं सिंहं सवितृधामके
वज्रेभं नन्दकं चक्रं चामरं धाम्नि वज्रिणः ५४

जाम्बूनदमयं मेषं शक्तिं पावकधामनि
अयसा महिषं पाशं हेमजं यमधामनि ५५

अयसा नन्दकं गर्भं निर्ऋतेस्तु विमानके

वरुणे मकरं पाशं लोहजं हेमजं तथा  ५६

वायोः कृष्णमृगं हैमं व्यालं तारापतेः क्षिपेत्
नरवाहे नरः प्रोक्तो मकरो मदनालये  ५७

टङ्कं दन्ताक्षमाला च विघ्नेशावासगर्भके
ओङ्कारं वक्रदण्डं च सौवर्णं चार्यकस्य तु  ५८

अश्वत्थं करकं सिंहं छत्रं स्वर्णे कारयेत्
अश्वत्थः पुरतः स्थाप्यश्छत्रं तस्योपरि स्थितम्  ५९

कुण्डकापरभागे तु केसरी दक्षिणे भवेत्
सौगते धामके गर्भं श्रीवत्साशोकसिंहकम्  ६०

कमण्डल्वक्षमाला च शिखिपिञ्छं तु हेमजम्
त्रिच्छत्रं करकं तालवृन्तं रुक्ममयं भवेत्  ६१

वृक्षस्तु पुरतः स्थाप्यश्छत्रं तस्योपरि स्थितम्
पिञ्छं दक्षिणभागेऽक्षमाला वामे तु कुण्डका  ६२

श्रीरूपं मध्यमे स्थाप्यं देसरी तत्र विन्यसेत्
अपरे करकं तालवृन्तं गर्भो जिनालये  ६३

शुकं चक्रं च हैमं तु सिंहं शङ्खं च राजतम्
मृगं ताम्रमयं चैव कृष्णलोहेन नन्दकम्  ६४

एवं दुर्गाविमाने तु गर्भं कुर्याद् विचक्षणः
खट्वाङ्गं नन्दकं शक्तिं क्षेत्रपालस्य हेमजम्  ६५

पद्मं लक्ष्म्याः सरस्वत्या ओङ्कारं च त्रिवर्णकम्
ध्वाङ्क्षकेतूत्पलं हैमं ज्येष्ठाकोष्ठस्य गर्भके  ६६

कपालशूलघरण्टाभिः प्रेतान् कालीगृहे न्यसेत्
हंसोक्षशिखिताक्ष्याँश्च सिंहेभप्रेतरूपकान् ६७

जाम्बूनदमयान् मातृकोष्ठकेषु निधापयेत्
पद्माक्षसूत्रकं दीपं रोहिणीगृहगर्भके ६८

दर्पणं चाक्षमालां च पार्वतीभवने विदुः
पद्माक्षसूत्रकं पूर्णकुम्भं मोहिनिधामनि ६९

छत्रध्वजपताकाश्च सचिह्नैः सह वाहनैः
अनुक्तानां च देवानां देवीनां गर्भमिष्यते ७०

द्विजातीनां तु वर्णानां जातिगर्भो विधीयते
करकं दन्तकाष्ठं च शुल्बं हेममयं भवेत् ७१

यज्ञोपवीतं यज्ञाग्निं यज्ञभाण्डं च राजतम्
यज्ञोपवीतमध्यस्थं यज्ञभाण्डं च दक्षिणे ७२

वामे तु करकं काष्ठमनलं पुरतो भवेत्
विप्रगर्भमिदं प्रोक्तं स्वस्तिकानि चतुर्दिशि ७३

मध्ये हेममयं चक्रं वामे शङ्खं च राजतम्
कर्मुकं ताम्रजं वामे दण्डो रुक्मेण दक्षिणे ७४

खड्गं चायसमेव स्याच्चतुर्नागाश्चतुर्दिशि
हैममायसकं ताम्रं राजतं क्रमशो न्यसेत् ७५

मध्ये श्रीरूपकं हैमं स्वस्तिकानि चतुर्दिशि
छत्रध्वजपताकाश्च दण्डं शासनात्मकम् ७६

राजद्वारे भवेद् गर्भमन्येषां तु यथार्हकम्

वार्ष्णेयकानां गर्भं चेद् विजयद्वारदक्षिणे ७७

अयसा हलजिह्वां च शङ्कं ताम्रकुलीरकम्
पञ्चायुधं सीसमाषं हयं वृषगजौ हरिम् ७८

अर्काग्निवरुणेन्दूनां स्थाने सम्यङ् निवेशयेत्
चत्वारो धेनुकाः श्वेतनिर्मिताश्च चतुर्दिशि ७९

गोपुङ्गवं च पुरतो श्यानां प्रविधीयते
बीजपात्रं हलं हैमं ताम्रजं युगमिष्यते ८०

रजतेन पशुं विद्याच्चतुर्दिक्षु विनिक्षिपेत्
मध्ये गोपुङ्गवं चैव तन्निरीक्ष्य युगं पुनः ८१

हलं दक्षिणभागे तु वामांशे बीजपात्रकम्
बीजं हिरण्मयं शूद्रगर्भं वैश्ये च सम्मतम् ८२

गृहाणां गृहगर्भं च जातिगर्भं विमिश्रितम्
अनेकभूमियुक्तानि यानि वासगृहाणि च ८३

पुष्पदन्ते च भल्लाटे महेन्द्रे च गृहक्षते
दक्षिणे नेत्रभित्तौ तु सौम्यादौ तु चतुर्गृहे ८४

द्वारप्रदक्षिणे स्तम्भे योगे वाऽपि विधीयते
स्थाली तदुपधानं च दार्विकं तण्डुलं खजम् ८५

गलक्यं दन्तकाष्ठाग्निं कृष्णं लोहं महानसे
दक्षिणे भवने गर्भः कुम्भः शाल्युदपूरितः ८६

धनसद्मनि गर्भस्तुसार्गलं कुञ्चिकं भवेत्
पर्यङ्कदीपशयनं गर्भंविद्यात् सुखालये ८७

येन यत् कर्म निष्पाद्यं तेन तद्गृहगर्भकम्
यानि यस्य स्वचिह्नानि तानि तस्य निधापयेत्  ८८

सभाप्रपामण्डपेषु कर्णपादे प्रदक्षिणे
द्वितीयस्तम्भके द्वारदक्षिणाङ्घ्रौ तु वा न्यसेत्  ८९

अयोमयगजो गर्भः कृष्णलोहेन कोद्रवः
लक्ष्मीं सरस्वतीं हेमां पात्रमध्ये तु विन्यसेत्  ९०

गर्भो नाट्यसभायां च प्रक्षिपेत् कुटिकामुखे
मण्डितस्तम्भमूले वाऽप्युभयोरपि चेष्यते  ९१

आतोद्यानि च सर्वाणि सर्वलोहमयानि च
श्रीवत्सं पङ्कजं पूर्णकुम्भं हेमजमिष्यते  ९२

हेमगर्भसभागर्भो द्वारस्तम्भे विधीयते
पूर्वोक्ते कर्णपादे वा गर्भस्थानं तु तस्य वै  ९३

तुलाभाराभिषेकार्थं मण्डपे वाऽथ तद् भवेत्
पाषण्ड्याश्रमिणां वासे तत्तच्चिह्नं तु गर्भकम्  ९४

जात्यन्तराणां सर्वेषां तत्तच्चिह्नं प्रयोजयेत्
गृहिणी गर्भिणी कर्तुर्यदि गर्भं न निक्षिपेत्  ९५

रत्नानि धातवश्चैव स्वल्पविस्तारभाजने
तद्दैवस्थानभावज्ञैर्न्यस्तव्यानीह तानि वै  ९६

द्वारप्रदक्षिणे स्थाने स्वामिस्थानस्य दक्षिणे
अभ्यन्तरमुखं गर्भं वस्तुमध्यं बहिर्मुखम्  ९७

इदं मन्त्रं समुच्चार्य प्राङ्मुखो वाऽप्युदङ्मुखः
पूर्वोक्तविधिना सम्यक् स्थापयेत् स्थपतिः क्रमात्  ९८

अयं मन्त्रः
स्वरदेवताभ्यो मन्त्रेभ्यः स्वाहा
सर्वरत्नाधिपतये स्वाहा
उत्तमप्रजापतये सत्यवादिने नमः
श्रियै नमः
सरस्वत्यै नमः
वैवस्वताय नमः
वज्रपाणये नमः
अभिनवसर्वविघ्नप्रशमनाय नमः
नमो वह्नये स्वाहा
वापीकूपतटाके तु दीर्घिकासेतुबन्धने
मत्स्यमण्डूककुलिरं सर्पं वै शिंशुमारकम् ९९

हेमजं तदुदग्भागे पूर्वायां दिशि वाथवा
पुरुषाञ्जलिमात्रे तु श्वभ्रे पात्रं निधापयेत् १००

सुमुहूर्ते सुलग्ने च होराकरणसंयुते
रात्रौ गर्भमहन्येव स्थापयेच्चतुरिष्टकम् १०१

यद्यत् स्थानं तु गर्भस्य तत्रस्था प्रथमेष्टका
मृत्कन्दधान्यसल्लोहधातुरत्नौषधैः सह १०२

गन्धद्रव्यैश्च बीजैश्च विधेया प्रथमेष्टका
शैले शिलामयी प्रोक्ता चैष्टके चेष्टकाः शुभाः १०३

गर्भभाजनविस्तारा विस्तारद्विगुणायता
विपुलार्धघना सर्वहर्म्यके चतुरिष्टका १०४

अष्टौ द्वादश वा ग्राह्या मध्यमे तु महत्तरे
ऋजुदीर्घाङ्गुलिन्यासा समसंख्या हि पुंस्त्वभाक् १०५

स्त्रीत्वभागोजसंख्या सा वक्ररेखं नपुंसकम्
सुस्निग्धाः समदग्धाश्च सुस्वनास्ताः सुशोभनाः  १०६

पुंस्त्रीनपुंसके हर्म्ये योजयेत् ता यथाक्रमम्
यथा जाता पुरा तत्र स्थापनीया तथा भवेत्  १०७

शिला दोषविनिर्मुक्ता बिन्दुरेखादिवर्जिता
आदावेव तु कर्तव्या झषाले प्रथमेष्टका  १०८

निखाताङ्घ्रौ विमाने तु न्यस्तव्या गर्भमूर्धनि
तत्पूर्वदक्षिणे पूर्वं त्रिकोणेषु प्रदक्षिणम्  १०९

देवादीनां द्विजातीनां स्थापयेत् स्थपतिः क्रमात्
केचिच्छ्वभ्रस्य गम्भीरे पञ्चद्व्यंशावसानके  ११०

इष्टकादिचिते खाते वदन्ति प्रथमेष्टकाम्
पूर्ववद् वरवेषाढ्यो युक्त्या तत्र निधापयेत्  १११

रूपाण्यप्यौषधानि द्युतिमणि कनकाद्यष्टलोहानि धातून्
पात्रे न्यस्याञ्जनादीन् शुभयुतदिनपक्षर्क्षहोरामुहूर्ते
मृत्कन्दान्यष्टधान्यानि च निशि मतिमान् श्वभ्रमूले निधाय
क्षिप्त्वा पात्राय युक्त्या बलिमथ सलिले स्थापयेद् गर्भमादौ  ११२

अमरनरविमानद्वारयोगाङ्घ्रिमूले
विधिवदविकलाङ्गं गर्भमादौ निधाय
तदुपरि विधिनास्मिन् योगमङ्घ्रिं च पूर्वं
सकलविभवयुक्तं स्थापयेद् गर्भमूर्ध्नि  ११३

पञ्चपञ्चकलशोदकपूतौ श्वेतचन्दननवाम्बरयुक्तौ
सर्वमङ्गलविचित्रतरौ तौ स्थापयेत् स्थपतिरङ्घ्रिकयोगौ  ११४

इति मयमते वस्तुशास्त्रे गर्भविन्यासो नाम द्वादशोऽध्यायः

## अथ त्रयोदशोऽध्यायः

अधिष्ठानस्य चाधस्तादुपपीठं प्रयोजयेत्
रक्षार्थमुन्नतार्थं च शोभार्थं तत् प्रवक्ष्यते १

समं त्रिपादमर्धं वा पञ्चांशद्व्यंशमेव वा
सपादं वाऽथ सार्धं वा पादोनद्विगुणं तु वा २

द्विगुणं वा प्रकर्तव्यमात्ताधिष्ठान तुङ्गतः
उत्सेधे दशभागे तु एकैनैकेन वर्धनात् ३

पञ्चांशान्तमधिष्ठानजन्माद् बाह्ये तु निर्गमम्
दण्डं वा सार्धदण्डं वा द्विदण्डं वा त्रिदण्डकम् ४

अधिष्ठानजगत्या वा समं तत्पादबाह्यकम्
वेदिभद्रं प्रतिभद्रं सुभद्रं च त्रिधा मतम् ५

उच्छ्रये भानुभागे तु द्व्यंशेनोपानमीरितम्
पद्ममंशं तदूर्ध्वेऽर्धं क्षेपणं पञ्चभागिकम् ६

ग्रीवमर्धेन कम्पं स्याद् भागैकेनाम्बुजं भवेत्
शेषांशं वाजनं कम्पमष्टाङ्गमुपपीठकम् ७

षडङ्गं वा विधातव्यमूर्ध्वाधस्ताद् विनाम्बुजम्
वेदिभद्रं द्विधा प्रोक्तं सर्वहर्म्येषु योग्यकम् ८

अश्विभ्यां च द्विकैकांशैर्भानुभागाङ्गकांशकैः
त्र्यंशैकांशकभागैस्तु द्वाभ्यामंशेन योजयेत् ९

जन्मतो वाजनान्तं तु तुङ्गे त्रिनवभागके
पादुकं पङ्कजं कम्पं कण्ठमुत्तरमम्बुजम् १०

कपोतमालिङ्गान्तादि प्रतिवाजनमुच्यते
प्रतिभद्रमिदं नाम्ना सर्वालङ्कारसंयुतम् ११

युग्मेशाद्यांशकांशैस्तु द्व्येकाष्टांशांशकांशकैः
त्र्यंशैकेनांशकैर्द्वाभ्यामेकेनात्रैव योजयेत् १२

पादुकं पङ्कजं चैवमालिङ्गान्तरितं तथा
प्रत्यूर्ध्वे वाजनं कण्ठमुत्तराब्जकपोतकम् १३

आलिङ्गान्तरितं चोर्ध्वे प्रतिश्चैवोर्ध्ववाजनम्
द्विविधं प्रतिभद्रं स्यादेकभागाधिकं ततः १४

त्रिःसप्तांशे तदुत्सेधे द्वाभ्यां जन्म तथाम्बुजम्
अर्धेन कण्ठमर्धेन पद्मद्व्यंशेन वाजनम् १५

अर्धेनाब्जं तथा कम्पं कण्ठमष्टांशमीरितम्
अंशेनोत्तरमर्धेन पद्मं गोपानकं त्रिभिः १६

भागार्धमूर्ध्वकम्पं स्यादेतन्नाम्ना सुभद्रकम्
जन्म द्व्यंशं त्रियंशेन पद्ममंशेन कन्धरम् १७

द्वाभ्यां वाजनमेकेन कम्पमष्टांशकैर्गलम्
अंशेन कम्पकं द्वाभ्यां वाजनं कम्पमंशकम् १८

सुभद्रं द्विविधं प्रोक्तं सर्वालङ्कारसंयुतम्
सिंहेभमकरैर्व्यालैर्भूतैः पत्रैरलङ्कृतम् १९

प्रतिवक्त्रं झषाढ्यं स्याद् बालेनारूढमस्तकम्
अर्पितानर्पिते हर्म्ये सर्वत्र परिकल्पयेत् २०

अङ्गमङ्गं प्रति प्राज्ञैर्वृद्धिर्हानिस्तथोच्यते

तथा मसूरकाणां तु युञ्जीयादुपपीठके २१

आत्ताधिष्ठानतुङ्गाद् द्विगुणमथ समं सार्धमर्धं त्रिपादं
पञ्चांशद्व्यंशकं वानलसमभजिते द्व्येकमात्रोपपीठम्
सप्रत्यङ्गं समं चेत् तदपि च महता वाजनेनोपयुक्तं
सर्वस्निग्धान्यधस्ताद् दृढतरमतिना योजितव्यं बलार्थम् २२

इति मयमते वस्तुशास्त्रे उपपीठविधानो नाम त्रयोदशोऽध्यायः

## अथ चतुर्दशोऽध्यायः

तैतिलानां द्विजातीनां वर्णानां गृहकर्मणि
तद्योग्यं द्विविधं वस्तु जाङ्गलानूपभेदतः १

घनशर्दरया युक्तमत्यन्तं खनने खरम्
सितांशुतनुतोयाढ्यं जाङ्गलं भूतलं भवेत् २

खननं क्रियमाणस्य वस्तुनश्च बलं यथा
रूढोत्पलकृशेर्वारुसंयुक्तं तनुवालुकम् ३

अनूपमिति विख्यातं खात्वैव जलदर्शनम्
इष्टकोपलमृद्भिश्च वालुकैरपि चिक्कणैः ४

शर्कराभिः क्रमाच्छ्वभ्रं निश्छिद्रं पूरयेत् स्थिरम्
घनीकृत्येभपादैश्च काष्ठ खण्डैर्बृहत्तरैः ५

तत्खाते सलिलेनैव पूरितेऽक्षयता शुभा
समत्वं सलिलेनैव साधयित्वा विचक्षणः ६

गर्भं प्रक्षिप्य तं नीत्या होमं तत्र निधापयेत्
स्तम्भद्वित्रिगुणव्यासं तदर्धबहलान्वितम् ७

उपानोपरि पद्मं चोपोपानं च तदूर्ध्वतः
यथाशोभांशमानेन कुर्यात् तत्र विचक्षणः ८

उन्नतां प्रकृतिं भूमिं कृत्वा हस्तप्रमाणतः
घनीकृत्य तदूर्ध्वस्थमुपानं जन्म चोच्यते ९

तदूर्ध्वस्थमधिष्ठानं सोपपीठं तु केवलम्
सस्तम्भं वा सकुडचं वा जङ्घावर्गं तदूर्ध्वगम् १०

भूमिदेश इति ख्याता कपोतोर्ध्वगता प्रतिः
प्रसादादीनि वास्तूनि चाधितिष्ठन्ति यद्धि तत् ११

अधिष्ठानं तदुन्मानं जाति भूमिवशाद् द्विधा
तैतिलानां चतुर्हस्तं त्रिहस्तार्धं द्विजन्मनाम् १२

नृपाणां त्रिकरं सार्धद्विहस्तं यौवराजकम्
द्विहस्तं वणिजामेकहस्तं शूद्रस्य कीर्त्यते १३

एतज्जातिवशाद् भूमिवशादत्रैव कथ्यते
दण्डात् षण्मात्रहान्या तु द्वादशाद्यात् त्रिभूमिकम् १४

त्रितलस्योत्तमस्येष्टं पादेनोनं द्विहस्तकम्
क्षुद्राणामनया नीत्या विधातव्यं विचक्षणैः १५

तत्तत्पादोदयार्धेन षडष्टांशोनमानतः
अधिष्ठानस्य चोत्सेधं वास्तुवस्तुनि भूवशात् १६

यदुपानस्य निष्क्रान्तं तत् त्र्यंशेन विभाजयेत्
त्यक्त्वैकांशं बहिस्तत्र जगतीं कारयेद् बुधः १७

तद्वत् कुमुदपट्टं च तद्वत् कण्ठस्य वेशनम्

आत्तोत्सेधांशमानं तु भागमानेन वक्ष्यते १८

अष्टसप्तशशिबन्धभागिकश्चन्द्रबन्धशशिभागिकैः क्रमात्
वप्रकं कुमुदकम्पकन्धरं कम्पवाजनमधोर्ध्वकम्पकम् १९

पादबन्धमुदितं तदुच्छ्रये भानुभिर्द्विगुणितांशके कृते
देवविप्रनृपवैश्यशूद्रकेष्वेवमुक्तमृषिभिः पुरातनैः २०

चन्द्रदृक्शशिशिवांशकै रसैर्धातुभिश्च समभागिकैः क्रमात्
वाजनं प्रतिमुखं त्रियश्रकं दृक् च वृत्तकुमुदं तु वप्रकम् २१

त्रिःषडंशसमभागिके तले नागवक्त्रसदृशं प्रतिद्वयम्
देवविप्रनृपमन्दिरेषु तद्योग्यकं ह्युरगबन्धकं भवेत् २२

अंशाध्यर्धार्धभागैर्मुनिरसशशिभिश्चन्द्रदृक्च्छैवभागैः
क्षुद्रोपानाब्जकम्पं जगतिकुमुदकं धारया युक्तमूर्ध्वे
आलिङ्गान्तादिकं तत्प्रतिमुखमथ तद्वाजनं पद्मयुक्तं
त्रिःसप्तांशे तलोच्चे करिहरि मकर व्यालरूपादि भूष्यम् २३

प्रतिक्रमं तत् सुरमन्दिरोचितं विचित्रितं पत्रलतादिरूपकैः
द्विजन्मभूमीश्वरयोर्मतं गृहे शुभप्रभं पुष्टिकरं जयावहम् २४

एकद्व्येकेन षड्भिः शशिशिवशशिभिर्वेद चन्द्रैकभागै-
र्द्व्यंशैकेनांशनेत्रैः शिवशशिसमभागेन जन्माब्जकं च
वप्रं पद्मं गलाब्जं कुमुदमुपरि पद्मं च कम्पं गलं तत्
कम्पं पद्मं च पट्टीकमलमुपरिकम्पं च षड्विंशदंशे २५

पद्मकेसरमेतदुदाहृतं कम्पवाजनपङ्कजकैर्युतम्
कुम्भवप्रयुतं च सकन्धरं शम्भुधामनि तत् प्रविधीयते २६

भागेष्वेकार्धकार्धैस्तदुपरि चतुरंशैस्तथार्धांशकार्धै-

द्व्यर्धांशार्धद्विभागैस्तदुपरि च तथार्धांशकार्धेन जन्मम्
वप्रं कञ्जं गलाब्जं तदुपरि कुमुदं पङ्कजं कम्पकण्ठं
कम्पं पद्मं महावाजनमुपरिदलं कम्पकं पङ्कजाढ्यम्  २७

पुष्पपुष्कलमेतदुदाहृतं कल्पितं नवपङ्क्तिभिरुच्छ्रये
शिल्पिभिः प्रसरैरपि पूजितामूर्ध्वमध्यममुखे विमानके  २८

द्वाभ्यामेकेन सप्तांशकशशिशिववेदैकचन्द्राग्निभागै-
रेकेनैकेन वेदैः शिवशशिनयनैकेन मोहामराब्जम्
हृत्पद्मं कैरवाब्जं गलधरगलकम्पं दलं तत्कपोतं
चालिङ्गान्तादिकं तत्प्रतिमुखमथ तद्वाजनं पङ्कजाढ्यम्  २९

श्रीबन्धं स्यादेतदुच्चे चतुर्वस्वंशे कुर्याच्छान्तधीर्वर्धकिस्तत्
देवेशानां मन्दिरेष्वेवमुक्तं श्रीसौभाग्यारोग्यभोग्यं ददाति  ३०

तुङ्गे षड्विंशदंशे खुरमथ जगतीकैरवं कम्पकण्ठं
कम्पं पद्मं कपोतं तदुपरि च तथा निम्नमन्तादिवक्त्रम्
कम्पं भागेन षड्भिः शरशशिगुणचन्द्रैकबन्धांशकांशै-
र्द्वाभ्यामेकेन कुर्यादमरनरपतेर्मन्दिरे मञ्चबन्धम्  ३१

आलिङ्गयुक्तमथ चान्तरितप्रतीभ्यां तद्वाजनेन च वियुक्तकमेतदेव
श्रीकान्तनामकमसूरकमष्टकोणं वृत्तं तु वा कुमुदमम्बरमार्गिणां तत्
३२

एकद्व्येकर्तुवेदैः शशिनयनशिवद्व्येकदृक्चन्द्रसार्धा-
र्धांशैर्जन्माब्जकम्पं जगतिकुमुदकं कम्पकण्ठं च कम्पम्
पद्मं पट्टं च कण्ठं तदुपरि च तथा वाजनाब्जं च पट्टं
श्रेणीबन्धं सुराणामुदितमिदमलं तुङ्गषड्विंशदंशे  ३३

सार्धार्धेष्वंशकांर्गुणशशिशिवचन्द्रद्विकैकेन जन्म-
क्षुद्रं पद्मं धृगब्जं कुमुदमुपरि पद्मं तथालिङ्गमूर्ध्वे

आलिङ्गान्तः प्रतिवाजनमथ मतिमान् योजयेत् त्रिःषडंशे
तुङ्गे देवेश्वराणामिदमुदितमगारेऽनघं पद्मबन्धम् ३४

द्व्येकैकांशैः शरांशैर्युगशशिशिवदृक् चन्द्रशैवाश्विनीभि-
र्भागेनोपानकञ्जं तदुपरि च तथा कम्पवप्रं च कुम्भम्
पद्मं पट्टं च कण्ठं तदुपरि च तथा कम्पपद्मं च पट्टी-
पट्टं तद्वप्रबन्धं तदपि च सहितं सद्विकैर्विंशदंशैः ३५

तदेव वृत्तं कुमुदं तु वाजने कपोतयुक्त हि कपोतबन्धकम्
तदेव वेदैः प्रतिवाजनं प्रतिस्त्रिकाश्रयुक्तं प्रतिबन्धमुच्यते ३६

एकद्व्येकाग्नि भागैः शशियुगलशिवद्व्येकचन्द्रेशदृग्भि-
श्चन्द्रैकैकाद्विचन्द्रैः खुरकमलमथो कम्पकण्ठं च कम्पम्
पद्मं पट्टाब्जनिम्नं कमलमुपरि कुम्भं दलं निम्नमन्ताद्
यास्याच्चोर्ध्वे प्रतिवाजनमथ कलशाख्येन भागास्त्रिरष्टौ ३७

एतानि भेदैस्तु चतुर्दशैव प्रोक्तानि तज्ज्ञैस्तु मसूरकाणि
सर्वाणि नास्यङ्घ्रियुतानि युक्त्या दृढीकृताङ्गानि मयोदितानि ३८

भागेनार्धत्रिपादाङ्घ्रिभिरथ युगलाध्यर्धचन्द्रार्धपादै-
र्मात्रैर्वृद्धिश्च हानिर्दृढतरमतिना योजितव्या बलार्थम्
शोभार्थं भागमङ्गप्रतिवरसमनीचाल्पहर्म्ये तलाना-
मेवं प्रोक्तं यमीन्द्रैरविकलमतिभिस्तन्त्रविद्भिः पुराणैः ३९

मसूरकमधिष्ठानं वस्त्वाधारं धरातलम्
तलं कुट्टिममाद्यङ्गं पर्यायवचनानि हि ४०

यावज्जगतिनिष्क्रान्तं तावत् कुमुदनिर्गमम्
अम्बुजानां तु सर्वेषामुत्सेध समनिर्गमम् ४१

दलाग्रतीव्रमुत्सेधात् पादं पादार्धमेव वा
वेत्राणामपि सर्वेषां चतुर्भागैकनिर्गमम् ४२

तत्समं वा त्रिपादं वा महावाजननिर्गमम्
एवं तीव्रक्रमं प्रोक्तं शोभाबलवशात् तु वा  ४३

प्रवेशनिर्गमं कुर्यात् सर्वाङ्गानां मसूरके
प्रतिच्छेदं नकर्तव्यं सर्वत्रैवं विचक्षणैः  ४४

द्वारार्थं यत् प्रतिच्छेदं सम्पद्द्वारं च नेत्यलम्
पादबन्धमधिष्ठानं छेदनीयं यथोचितम्  ४५

जन्मादिपञ्चवर्गे तु तत्तत्तुङ्गावसानके
सपट्टिकाङ्गेऽधिष्ठानेऽप्यन्यस्मिन्नेवमूह्यताम्  ४६

यद् यत्रैवोचितं प्राज्ञस्तत् तत्रैव प्रयोजयेत्  ४७

स्तम्भोच्चार्धं वा मसूरोच्चमानं तत्षट्सप्ताष्टांशकं भागहीनम्
वस्त्वाधारोच्चं भवेत् सर्ववस्तुष्वेवं पूर्वं शम्भुना सम्यगुक्तम्  ४८

इति मयमते वस्तुशास्त्रे अधिष्ठानविधानो नाम चतुर्दशोऽध्यायः

## अथ पञ्चदशोऽध्यायः

पादायामं सविस्तारमाकारं भूषणादिकम्
लक्षणान्तरतः सम्यग् वक्ष्ये संक्षेपतः क्रमात्  १

स्थाणुः स्थूणश्च पादश्च जङ्घा च चरणोऽङ्घ्रिकः
स्तम्भश्च तलिपः कम्पः पर्यायवचनानि हि  २

सवितस्त्यष्टहस्तोच्चं द्वादशक्ष्माद्यपादकम्
तत्तद्वितस्तिहीनेन त्रिकरं चान्त्यभूमिके  ३

आत्तोत्सेधांशमानेन पादोच्चं वा विधीयते
आत्ताधिष्ठानतुङ्गस्य द्विगुणं पादतुङ्गकम्  ४

द्विगुणादधिकोत्सेधः स्तम्भः प्रोक्तः स्वयंभुवा
अष्टविंशतिमात्रैस्तु मूलभूस्तम्भविस्तृतम् ५

तत्तद्द्व्यङ्गुलभिन्नेन षण्मात्रं चान्त्यभूमिके
पादोच्चे पङ्क्तिनन्दाष्टभागेंऽशं पादविस्तृतम् ६

तदर्धं वा त्रिभागोनं चतुर्भागोनमेव वा
कुड्यस्तम्भस्य विस्तारस्तेन द्वित्रिचतुर्गुणः ७

पञ्चषड्गुण एवं स्याद् भित्तिविष्कम्भ इष्यते
जन्मोर्ध्वे स्तम्भविक्षेपहोमाः स्तम्भविधौ विदुः ८

प्रतिस्तम्भः प्रतेरूर्ध्वे चोत्तराधो हितायतिः
जन्मोर्ध्वे स्तम्भनिक्षेपः स्तम्भायामस्त्रिभागभाक् ९

गाम्भीर्यमवटं कृत्वा तदुपज्ञतलं कुरु
पादुकाद्युत्तरान्तस्थो निखातस्तम्भ इष्यते १०

अधिष्ठानोत्तरान्तस्थो झषालस्तम्भ उच्यते
तद्व्यासादर्कभागाद्यं षड्भागोनाग्रविस्तरः ११

मूलभूस्तम्भतुङ्गस्य द्वादशाद्याः षडंशयुक्
ऊर्ध्वोर्ध्वस्तम्भतुङ्गं स्यादेवं तद्विस्तरक्रमः १२

अग्राकारं युगाश्रं तु कुम्भमण्डिसमन्वितम्
ब्रह्मकान्तं तदष्टाश्रं विष्णुकान्तमिहोच्यते १३

षडश्रमिन्द्रकान्तं स्यात् सौम्यं तत् षोडशाश्रकम्
कर्णमात्रेण तन्मूले चतुरश्रमितोर्ध्वतः १४

अष्टाश्रं वा द्विरष्टाश्रवृत्तं पूर्वाश्रमीरितम्
कुम्भमण्डियुतं वाऽपि रुद्रकान्तं सुवृत्तकम् १५

विस्तारद्विगुणं मध्येऽष्टाश्रयुक्तं युगाश्रकम्
वियुक्तं कुम्भमण्डिभ्यां मध्येऽष्टाश्रं तदुच्यते १६

चतुरष्टाश्रवृत्ताभं रुद्रच्छन्दं समांशतः
दण्डाध्यर्धे द्विदण्डेनोत्तुङ्गद्विगुणविस्तृतम् १७

पद्मासनं तु कर्तव्यं मूले पद्मासनं भवेत्
यथेष्टाकृतिसंयुक्तमूर्ध्वतो वा समण्डितम् १८

चक्रवाकाकृतिव्याप्तं मूले पद्मासनान्वितम्
सभद्रं मध्यभागे तु भद्रकं तद् द्विमण्डितम् १९

व्यालेभसिंहभूतादिमण्डितं यत्तु मूलतः
यथेष्टाकृतिसंयुक्तं तत्तन्नाम्ना समीरितम् २०

आत्तमेव तदायामे शुण्डभेदसमन्वितम्
युतं तत् कुम्भमण्डिभ्यां शुण्डपादमिति स्मृतम् २१

मुक्तोत्करणकर्माङ्गं पिण्डिपादं तदेव हि
कर्मायामेन चाग्रे तु चतुरश्रसमन्वितम् २२

तदधस्त्वर्धदण्डेन पद्मं वस्वश्रसंयुतम्
तदधस्तु विकाराश्रं दण्डेनाब्जं तु पूर्ववत् २३

तदधो दण्डमानेन मध्यपट्टं युगाश्रकम्
पद्मं च षोडशाश्रं च पूर्ववत् परिकल्पयेत् २४

मूले शेषं युगाश्रं स्याच्चित्रखण्डं तदुच्यते
तदेवाष्टाश्रकं मध्यपट्टं श्रीखण्डमुच्यते २५

मध्यपट्टं कलाश्रं चेच्छ्रीवज्र स्तम्भमुच्यते

अग्राकारं युगाश्रं स्यात् त्रिपट्टक्षेपणान्वितम्  २६

क्षेपणस्तम्भमित्युक्तं पट्टं पत्रादिशोभितम्
ऊर्ध्वाधस्ताच्छिखामानं त्रिचतुर्भागमेव वा  २७

सर्वे पोतिकया युक्ता नानारूपैर्विचित्रिताः
पादाग्रविपुलं यत्तु तद् दण्डमिति कथ्यते  २८

सर्वाण्यङ्गानि हर्म्याणां मानयेद् दण्डमानतः
सपादं सार्धपादोनद्विगुणं द्विगुणोन्नतम्  २९

श्रीकरं चन्द्रकान्तं च सौमुख्यं प्रियदर्शनम्
यथाक्रमेण नामानि कलशानां भवन्ति हि  ३०

पोतिकाखण्डमण्डीनि कुम्भं स्कन्धं च पद्मकम्
मालास्थानं क्रमेणैव स्तम्भाग्रात् परिकल्पयेत्  ३१

कुम्भोच्छ्रये नवांशे धृग्भागेन चतुरंशकैः
कमलं कण्ठमंशेन भागेनास्यं प्रकीर्तितम्  ३२

भागेन पद्ममर्धेन वृत्तमर्धेन हीरकौ
हीरौ पादसमव्यासौ तत्कर्णेनास्यविस्तृतम्  ३३

तत्कर्णं कुम्भविस्तारं तत्कर्णं फलकायतम्
अथवा फलकायामं चतुर्दण्डं त्रिदण्डकम्  ३४

सार्धत्रिदण्डमायाममुत्सेधाख्यं त्रिदण्डकम्
तदुत्सेधे त्रिभागे तु भागेनोत्सन्धिरिष्यते  ३५

भागेन वेत्रमंशेन पद्मं पाल्याभमिष्यते
नागवक्त्रसमाकारमावेत्रात् पादरूपवत्  ३६

पादविस्तारविस्तारं धृक्करठं वीरकारडकम्
सर्वेषामपि पादानां वीरकारडं युगाश्रकम् ३७

तदुत्सेधत्रिपादोनं दरडोत्थं स्कन्धमिष्यते
तदधस्तु तदर्धेन पद्मं पत्रविचित्रितम् ३८

मालास्थानमधस्तस्माद् दरडमानसमुन्नतिः
पादविस्तारविस्तारा पोतिका तत्समोदया ३९

पञ्चदरडसमायामा श्रेष्ठार्धोच्चा कनिष्ठिका
आयता सा त्रिदरडेन चतुर्दरडेन दीर्घका ४०

त्रिभागोना त्रिपादोच्चा मध्यमा पोतिका भवेत्
पूर्वोक्तं तत् समरडीनां सकुम्भानां चतुर्गुणम् ४१

त्रिगुणं केवलानां तु पादानां प्रविधीयते
सर्वेषामपि पादानां यथेष्टायतमीरितम् ४२

त्दुच्चत्रिचतुर्भागोच्चा वा स्वाग्रे तु पट्टिका
अर्धं त्रिद्व्यंशमङ्घ्र्यूनं छायामानं विधीयते ४३

त्रिभागं वा चतुर्भागं तरङ्गस्थानमिष्यते
सन्नुद्रन्नेपणं मध्यपट्टं पत्रविचित्रितम् ४४

समास्तरङ्गाश्चान्योन्यहीनाः सर्वत्र सम्मताः
अग्रनिष्क्राममर्धं वा त्रिभागं वा स्वतारतः ४५

मुष्टिबन्धोपरिन्निप्त व्यालसंहृतिरूपवत्
सनालीकं समतलं सनाटकमथापि वा ४६

भूतेभमकरैर्व्यालसंयुक्तं चाग्रमरडनम्

पार्श्वयोः पोतिकामध्ये पट्टं पादविशालवत्  ४७

रत्नबन्धक्रियावल्ली चित्रा वाग्रस्थपट्टिका
नानाचित्रैर्विचित्रा वा सा प्रोक्ता चित्रपोतिका  ४८

पत्रैर्विचित्रिता पत्रपोतिकेति प्रकीर्तिता
महार्णवतरङ्गाभतरङ्गाभा तरङ्गिणी  ४९

चतुःषडष्टपङ्क्त्यर्कसंख्या वा स्युस्तरङ्गकाः
बहवोऽपि समाश्लैते चान्योन्याः स्युर्वराः क्रमात्  ५०

पादमर्धं त्रिपादं वा भित्तेः स्तम्भस्य निर्गमम्
चतुरष्टाश्रवृत्तानां यथाक्रममिति स्मृतम्  ५१

द्विहस्ताद्यं चतुर्हस्तं स्तम्भान्तरमिति स्मृतम्
षडङ्गुलविवृद्ध्या तु नवभेदं प्रकीर्तितम्  ५२

गृहीतांशवशेनापि यथायुक्त्या प्रयोजयेत्
स्तम्भस्तम्भान्तरं सर्वं प्रासादे सार्वदेशिके  ५३

विषमस्तम्भभागं तु वास्तुवस्तुविनाशनम्
सायतं चापि तत्सर्वं तन्नाम्नैव प्रपद्यते  ५४

दारुस्तम्भविशालं वा सार्धं द्वित्रिगुणं तु वा
शिलास्तम्भविशालं स्याद् देवानां नैव मानवे  ५५

इष्टकाश्मद्रुमैः सर्वैः स्तम्भाः प्रोक्ताश्चिरन्तनैः
युग्मायुग्मं तु देवानामयुग्मं तु नृणां मतम्  ५६

अन्तःस्तम्भं बहिः स्तम्भमाजुसूत्रं यथा भवेत्
गृहाणां भित्तिमध्ये तु शालानां तु तथा भवेत्  ५७

प्रासादानां तु पाद्बाह्ये पान्मध्ये शयनासने
उपानादिशिरः केचित् केचित् स्तूप्यन्तमुन्नतम्  ५८

मुनयः प्रवदन्त्युच्चं प्रासादे सार्वदेशिके
पाद्बाह्ये पादमध्ये वा सभामण्डपयोर्मतम्  ५९

अन्तर्बहिश्च मध्ये तु सालानां मानसूत्रकम्
युञ्जीयादेवमेवं तु सर्वेषां सम्पदां पदम्  ६०

विपरीते विपत्त्यै स्यादिति शास्त्रविनिश्चयः
स्तम्भोत्तरादिकाङ्गानां द्रव्यं द्रुमोपलेष्टकाः  ६१

स्निग्धसारमहासारा ह्यवृद्धास्तरुणेतराः
अवक्रा निर्व्रणाः सर्वे ग्रहीतव्या महीरुहाः  ६२

पुण्याद्रिवनतीर्थस्था दर्शनीया मनोरमाः
सर्वसम्पत्समृद्ध्यर्था भवेत्युस्ते न संशयः  ६३

पुरुषः खदिरः सालो मधूकः चम्पकस्तथा
शिंशपार्जुनाजकर्णी क्षीरिणी पद्मचन्दनौ  ६४

पिशितो धन्वनः पिण्डी सिंहो राजादनः शमी
तिलकश्च द्रुमाश्चैते स्तम्भवृक्षाः समीरिताः  ६५

निम्बासनशिरीषाश्च एकः कालश्च कट्फलः
तिमिसो लिकुचश्चैव पनसः सप्तपर्णकः  ६६

भौमा चैव गवाक्षी चेत्यादयश्चोर्ध्वभूरुहाः
एकवर्णाः स्थिराः स्निग्धाः सुखसंस्पर्शनान्विताः  ६७

प्राचीनाश्चाप्युदीचीना भूमग्नाः शुभदाः शिलाः

स्त्रीलिङ्गाश्चापि पुल्लिङ्गा निर्दोषाश्च नपुंसकाः ६८

सुघनाः समदग्धाश्च सुखराश्चेष्टकाः शुभाः
स्त्रीलिङ्गाश्चापि पुल्लिङ्गा भिन्नच्छिद्रादिवर्जिताः ६९

एतैरेवंविधैर्द्रव्यैः कृतं वस्तु समृद्धये
धर्मार्थकामसौखानां भवेदेवेति निश्चितम् ७०

न देवतालयान्तस्थाः प्रहता वा न विद्युता
न दावानलसंलीढा न भूतालयमध्यगाः ७१

न महापथ संरूढा न तु ग्रामसमुद्भवाः
न घटाम्बुभिरासिक्ता न पक्षिमृगसेविताः ७२

न वायुना न मातङ्गैर्भग्ना नैव गतासवः
न चण्डालजनाकीर्णा न सर्वजनसेविताः ७३

नान्योन्यवलिता भग्ना न वल्मीकसमाश्रिताः
न लतालिङ्गिता गाढा न सिराकोटरावृताः ७४

नाङ्कुरावृतसर्वाङ्गा न भृङ्गकीटदूषिताः
नाकालफलिनो ग्राह्या न श्मशानसमीपगाः ७५

सभाचैत्यसमीपस्था देवादीनां न भूरुहाः
वापीकूपतटाकादिवस्तुष्वपि च सम्भवाः ७६

विनष्टवस्तुसञ्जातद्रव्यं सर्वविपत्करम्
तस्मात् सर्वप्रयत्नेन शुद्धं द्रव्यं प्रगृह्यताम् ७७

शिला देवालये ग्राह्या द्विजावनिपयोर्मताः
पाषण्डिनां च कर्तव्या न कुर्याद् वैश्यशूद्रयोः ७८

कर्तव्यं यदि तद् वास्तु धर्मकामार्थनाशकृत्
एकद्रव्यकृतं शुद्धं मिश्रं द्विद्रव्यनिर्मितम् ७९

त्रिद्रव्यसंयुतं यत्तु तत् सङ्कीर्णमुदाहृतम्
पूर्वोदितानां वासेषु कर्तव्यं सम्पदां पदम् ८०

सर्वद्वारिकनक्षत्रे शुभपक्षमुहूर्तके
गच्छेदरण्यं द्रव्यार्थी कृतकौतुकमङ्गलः ८१

निमित्तैः शकुनैर्योग्यैः सह मङ्गलशब्दकैः
गन्धैः पुष्पैश्च धूपैश्च मांसेन कृसरेण च ८२

पायसौदनमत्स्यैश्च भक्ष्यैश्चापि पृथग्विधैः
अर्चयेदीप्सितान् सर्वान् वृक्षांश्च वनदेवताः ८३

भूतक्रूरबलिं दत्त्वा कर्मयोग्यद्रुमं हरेत्
मूलाग्रादार्जवं वृत्तं शाखानेकसमन्वितम् ८४

तत्तु पुंस्त्वं भवेन्मूले स्थूलं स्त्रीत्वं कृशाग्रकम्
स्थूलाग्रं कृशमूलं तु षण्डमेतदुदीरितम् ८५

मुहूर्तस्तम्भमुद्दिश्य पुंभूरुह उदीरितः
सर्वेष्वङ्गेषु वस्तूनां पुंस्त्रीषण्डं प्रकीर्तितम् ८६

पूर्वाशायां द्रुमस्यास्य स्वपेद् दर्भान्तरे शुचिः
स्वप्रदक्षिणपार्श्वे तु संस्थाप्य परशुं सुधीः ८७

पीत्वा शुद्धं पयो रात्रावपराभिमुखोऽपरः
स्थपतिर्वरवेषाढ्यो मन्त्रयेत् सपरश्वधः ८८

अयं मन्त्रः

अपक्रामन्तु भूतानि देवताश्च सगुह्यकाः
युष्मभ्यं तु बलं भूयः सोमो दिशतु पादपाः ८९

शिवमस्तु महीपुत्रा देवताश्च सगुह्यकाः
कर्मैतत् साधयिष्यामि क्रियतां वासपर्ययः ९०

एवमुक्त्वा नमस्कृत्य पादपेभ्यो नमः शुचिः
दुग्धतैलघृतैः सम्यक् सन्तेज्य परशोर्मुखम् ९१

उपक्रामेत्तु तं छेत्तुं यथाकामं वनस्पतिम्
मूले हस्तं व्यपोह्योर्ध्वे त्रिंश्छत्वा तत्र लक्षयेत् ९२

वारिस्रावो विवृद्ध्यर्थः क्षीरं पुत्रविवर्धनम्
शोणितं स्वामिनः हन्याद् वर्जयेत् तं प्रयत्नतः ९३

पतने सिंहशार्दूलहस्तिशब्दाः सुशोभनाः
रुदितं हसितं कोशं कूजितं निन्दितं वरैः ९४

पातयेदुत्तराग्रं तु पूर्वाग्रं वा वनस्पतिम्
ते दिशौ शुभदे स्यातामन्याशासु विपर्यये ९५

सालाश्मर्यजकर्णीनामूर्ध्वे तु पतनं शुभम्
मूले पृष्ठागमे बन्धुप्रेष्ययोश्च विनाशनम् ९६

निर्गमत्स्थितिमद् भूत्वा वृक्षान्तरनिपातने
शिरःसङ्गेन नाशः स्यान्मूलसङ्गे श्रमो भवेत् ९७

शरीरभङ्गं कर्तृणां नाशमग्रेऽप्यपत्यहृत्
अन्योन्यपतनं पूज्यं छेद्यं चोभयतः समम् ९८

चतुरश्रमृजुं कृत्वा मुहूर्तस्तम्भसंग्रहे

सितपट्टेन सञ्छाद्य स्यन्दने न्यस्य वेशयेत्  ९९

देवद्विजमहीपानां विशां  शकटेन तु
शूद्रस्य पुरुषस्कन्धेनानीयात्तु विचक्षणः  १००

पार्श्वयोः शाययित्वा तु शकटे न्यस्य वेशयेत्
प्रशस्ते द्वारि प्रग्राह्य स्थपत्यनुगतद्रुमम्  १०१

कर्ममण्डपके न्यस्य बालुकोपरि शाययेत्
प्रागग्रं चोत्तराग्रं वाप्याशुष्कं रक्षयेत् पुनः  १०२

परावृत्तं न कर्तव्यमाषण्मासं तु स द्रुमः
सर्वेन्द्रकीला एवं स्युः प्रापणीयाः प्रयत्नतः  १०३

अन्येषामपि कुप्यानां वेशने त्वग्रमग्रतः
मुहूर्तस्तम्भो देवानां द्विजातीनां यथाक्रमम्  १०४

कार्तमालश्च खदिरः खादिरश्च मधूककः
राजादनो यथासंख्य विस्तारायाममुच्यते  १०५

भानुरुद्रदशद्वारवितस्त्यायामसंयुताः
तत्संख्याङ्गुलिविस्तीर्णाः पङ्क्त्यंशोनाग्रविस्तराः  १०६

भूतसार्धचतुर्वेदगुणतालनिखातकाः
भूमिभूमिवशादुक्तं स्तम्भोच्चं विपुलं तु वा  १०७

झषालाङ्घ्रौ तु सर्वत्र निखातं परिवर्जयेत्
अश्वत्थोदुम्बरश्चैव प्लक्षश्च वटवृक्षकः  १०८

सप्तपर्णश्च बिल्वश्च पलाशः कुटजस्तथा
पीलुः श्लेष्मातकी लोध्रः कदम्बः पारिजातकः  १०९

शिरीषः कोविदारश्च तिन्त्रिणीको महाद्रुमः
शिलीन्ध्रः सर्पमारश्च शल्मली सरलस्तथा १९०

किंशुकश्चारिमेदश्चाभयाक्षा मलकद्रुमाः
कपित्थः कराटकश्चैव पुत्रजीवश्च डुराडुकः १११

कारस्करः करञ्जश्च वरणश्चाश्वमारकः
बदरो वकुलः पिराडी पद्मकस्तिलकस्तथा ११२

पाटल्यगरुकर्पूरा न ग्राह्या गृहकर्मणि
देवयोग्या इमे सर्वे मानुषाणामनर्थदाः ११३

तस्मात् सर्वप्रयत्नेन गृह्णीयान्न नरालये
ऊषरं पाराडुरं कृष्णाचिक्कणं ताम्रपुल्लकम् ११४

मृदश्चतस्त्रस्तास्वेव गृह्णीयात् ताम्रपुल्लकम्
अशर्कराश्ममूलास्थिलोष्टं सतनुवालुकम् ११५

एकवर्णं सुखस्पर्शमिष्टं लोष्टेष्टकादिषु
मृत्खराडं पूरयेदग्रे जानुदघ्ने जले ततः ११६

आलोडय मर्दयेत् पद्भ्यां चत्वारिंशत् पुनः पुनः
क्षीरद्रुमकदम्बाम्राभयाक्षत्वग्जलैरपि ११७

त्रिफलाम्बुभिरासिक्त्वा मर्दयेन्मासमात्रकम्
चतुष्पञ्चशडष्टाभिर्मात्रैस्तद्द्विगुणायताः ११८

व्यासार्धार्धत्रिभागैकतीव्रा मध्ये परेऽपरे
इष्टका बहुशः शोष्याः समदग्धाः पुनश्च ताः ११९

एकद्वित्रिचतुर्मासमतीत्यैव विचक्षणः

जले प्रक्षिप्य यत्नेन जलादुद्धृत्य तत् पुनः १२०

निरार्द्रास्ताः प्रयोक्तव्या इष्टका इष्टकर्मणि १२१

एवं द्रुमेष्टकशिला विधिना गृहीत्वा कर्वन्तु वस्तु विहिता हि वराः
समृद्ध्यैयन्निन्दितं त्वपरवस्त्ववशिष्टमाद्यैर्द्रव्यं विनष्टभवनप्रभवं
विपत्त्यै १२२

स्तम्भायामं तारमाकारभेदं सालङ्कारं भूषणं च क्रमेण
युक्त्या युक्तं सम्पदामास्पदं तत्प्रोक्तं नृणां तैतिलानां मयेह १२३
इति मयमते वस्तुशास्त्रे पादप्रमाणद्रव्यपरिग्रहो नाम पञ्चदशोऽध्यायः

## अथ षोडशोऽध्यायः

उत्तरादिवृतेरन्तं प्रस्तारावयवं क्रमात्
संवक्ष्ये क्षिप्य सर्वेषां हर्म्याणामथ योग्यकम् १

उत्तरं त्रिविधं पादविस्तारं तत्समोद्गमम्
त्रिपादोदयमध्योच्चं विस्तारं पादतः समम् २

खण्डोत्तरं पत्रबन्धं रूपोत्तरमिति त्रिधा
त्रिपादं वा त्रिभागोनमर्धं वा कर्णनिर्गमम् ३

स्वस्तिकं वर्धमानं च नन्द्यावर्तसमाकृतिः
सर्वतोभद्रवृत्तिर्वा प्रत्युत्तरनिवेशनम् ४

त्रिभागैकं चतुर्भागं वाजनं निर्गमोद्गमम्
चतुरश्रं सपर्णाग्रं तदूर्ध्वे मुष्टिबन्धनम् ५

तुलाच्छेदेन वा कुर्यात् पृथग्वा वाजनोपरि
स्तम्भार्धविपुलं स्वार्धं तीव्रं पट्टाम्बुजक्रियम् ६

सनालिकमधस्तात् तु वाजनाद् दण्डनिर्गमम्
मूलाग्रयोः शिखोपेता तदूर्ध्वे तु प्रमालिका ७

स्तम्भव्याससमोच्चा वा त्रिचतुर्भागतीव्रका
कुम्भमण्दियुताग्रा च हस्तिमुण्डक सन्निभा ८

दण्डिकासमनिष्क्रान्ता तदूर्ध्वे दण्डिका भवेत्
स्तम्भार्धविपुला स्वार्धतीव्रा नीव्रार्धनिष्क्रमा ९

मुष्टिबन्धसमाकारचतुरश्रा यथा तथा
यथेष्टविपुलोत्तुङ्गं तत्तुङ्गसमवेशनम् १०

वलयं स्यात् तदूर्ध्वे तु गोपानं वा तदूर्ध्वतः
मुष्टिबन्धविशालोच्चा पट्टिकाक्षेपणाम्बुजा ११

छित्त्वार्पिताविशिष्टा तु दण्डिकोपरि पट्टिका
तस्यां छित्त्वा तु तन्मानं गोपानं चार्पयेद् बुधः १२

उत्तरान्तावलम्बं वा यथायुक्ति यथारुचि
वाजनोर्ध्वे तुलोर्ध्वे वा गोपानं योजयेद् बुधः १३

तुलान्तरसमं गोपानान्तरं प्रविधीयते
गोपानदण्डिकोर्ध्वं चेद् वाजनान्तावलम्बनम् १४

दण्डार्धविपुलं स्वार्धं तीव्रं गोपानमूर्ध्वतः
कम्पं समान्तरं कुर्याद् वलयच्छिद्रमन्तरे १५

दण्डिकावाजनान्तस्थं कायपादं यथांशकम्
पादविस्तारमर्धार्धनिष्क्रान्तं साग्रपट्टिकम् १६

पादानामन्तरं छाद्यं फलकैः सारदारुजैः

अष्टांशबहलं छन्नफलकाच्छाद्यमूर्ध्वतः  १७

गोपानस्योपरिष्टात्तु च्छादयेल्लोहलोष्टकैः
कपोतपालिकोत्सेधनिष्क्रान्तं द्वित्रिदण्डकम्  १८

एकहस्तं द्विहस्तं वा क्षुद्रे महति मन्दिरे
यथाशोभं यथाचित्रं कपोते कर्णपालिका  १९

तथा मध्यस्थिता वाऽपि सौधे ले समाहिता
विधेया वाजनस्योर्ध्वे भूतहंसादिकावलिः  २०

दण्डोच्चा वा त्रिपादोच्चा वाजनं पूर्ववद् भवेत्
कपोतालम्बनं तत् स्याद् दण्डार्धं वाऽथ दण्डकम्  २१

अध्यर्धादित्रिदण्डान्तं कपोतोच्चविनिर्गतम्
वसन्तकं वा निद्रा वा विधेया वाजनोपरि  २२

त्रिपादोच्चा तदूर्ध्वं स्यात् कपोतोच्चं तु पूर्ववत्
एवं स्याद् दृढकल्प्यं तच्छिलयेष्टकमात्रकैः  २३

यथाप्रयोगं स्थैर्यं तु तथा योज्यं विचक्षणैः
कपोतोच्चत्रिभागं वा पादं वा क्षुद्रनिष्कृतिः  २४

कपोते नासिका क्षुद्रे नीव्रोर्ध्वे स्थितकर्णिका
सपाददण्डा वाध्यर्धं द्विदण्डं विस्तृता स्थिता  २५

सिंहश्रोत्रशिखालिङ्गं पट्टिकान्तस्य पट्टिका
विधेया स्वस्तिकाकृत्या नासिकोर्ध्वे तु नासिका  २६

कुक्षिमानं शिखामानं यथाशोभनमेव वा
प्रतिवाजनकस्योर्ध्वे नेष्यते नासिकोच्छ्रयम्  २७

आलिङ्गं पादपादोच्चं पादात् पादविनिर्गतम्
तस्मादन्तरितं चोर्ध्वे निष्क्रान्तावेशनक्रियम्  २८

त्रिपट्टाग्रं हि पादोच्चं पादे पादान्तरे स्थितम्
दण्डं त्रिपादमर्धं वा प्रत्युत्सेधं तदूर्ध्वतः  २९

स्वोच्चत्रिपादनिष्क्रान्ता प्रतिरर्धेन वा तथा
दन्डः सपादः सार्धो वा प्रतिवक्त्रं विनिर्गमः  ३०

तावदूर्ध्वोद्गतिस्तस्याः प्रागुक्तविधिना कुरु
सव्याला वा ससिंहेभा ऋज्वी वा स्यात् प्रतेः कृतिः  ३१

तदुच्चत्रिचतुर्भागं वाजनं निर्गमोद्गमम्
समकरं चित्रखण्डं नागवक्त्रमिति त्रिधा  ३२

नागवक्त्रं नागफणं स्वस्त्याकृतिशिरःक्रियम्
तैतिलानां द्विजातीनां भवेत् समकरा प्रतिः  ३३

चतुरश्रं तु खण्डाग्रं मकरं चित्रखण्डकम्
नृपाणां वणिजां शूद्रजन्मनामर्धचन्द्रकम्  ३४

हस्तिरूपं भवेन्मुण्डं प्रत्यग्रं चित्रसन्निभम्
ककरं कर्कटं बन्धमन्यदप्येवमूह्यताम्  ३५

वाजनोर्ध्वे वलीकोर्ध्वे तुलां सम्यङ्निवेशयेत्
दण्डोच्चं वा त्रिपादोच्चमर्धतारसमन्वितम्  ३६

त्रिचतुष्पञ्चदण्डेन दीर्घं तत् साग्रनालिकम्
सव्यालाग्रं सम्भृताग्रं पार्श्वाङ्गस्थतरङ्गवत्  ३७

वलीकं स्याद् वलीकोर्ध्वे कर्तव्या वर्णपट्टिका
दण्डार्धार्धविशालोच्चा निश्छिद्रं स्यात् तदन्तरे  ३८

फलकैश्च तदूर्ध्वे तु दण्डोत्सेधा तुला स्थिरा
त्रिपादविस्तृता न्यस्ता प्रवेशानुगता शुभा ३९

तुलाविस्तारतारोच्चा जयन्ती स्यात् तुलोपरि
अर्धदण्डेन तत्रोच्चा जयन्त्यूर्ध्वेऽनुमार्गकम् ४०

तदूर्ध्वे फलका पादपादषड्भागतीव्रकाः
इष्टकाचूर्णसङ्घातप्रस्तरस्तम्भविस्तरम् ४१

करालमुद्गिगुल्मासकल्कचिक्कणकर्मवान्
उत्तरं वाजनं चैव तत्पार्श्वानुगतं भवेत् ४२

तुला द्वारानुयाता हि जयन्ती तिर्यगागता
अनुमार्गं तदूर्ध्वे तु द्वारस्यानुगतं शुभम् ४३

द्वारतिर्यग्गता वाऽथ तुला देवनृपेशयोः
त्रिदण्डं वा द्विदण्डं वा स्याद् वलीकतुलान्तरम् ४४

द्विदण्डं सार्धमध्यर्धं जयन्त्यन्तरमिष्यते
दण्डान्तरमनुमार्गं निश्छिद्रं स्यात् तदूर्ध्वतः ४५

अथ चित्रविचित्राङ्गा विधेया प्रस्तरक्रिया
क्षुद्राणां तु तुलादीनि यथा स्थैर्यं तथाचरेत् ४६

विरूपं वा सरूपं वा सर्वमङ्गं प्रयोजयेत्
तुलाद्रव्योपरिष्टात् तु फलकाच्छादनं तु वा ४७

इष्टका वा पिधातव्या शेषं पूर्ववदाचरेत्
पङ्क्त्यष्टभागविकलं हि मसूरकोच्चा-
न्मञ्चोन्नतं मतमथो तलिपार्धकं वा
यावद् बलं विपुलसुन्दरतां समेति

तावद् विधेयमधुना विधिना विधिज्ञैः ४८

मधुघृतदधिदुग्धं माषयूषं च चर्म कदलिफलगुलं च त्रैफलं नालिकेरम्
क्रमवशमनुभागैर्वर्धिहृतं लब्धचूर्णं शतमथ कृतमस्य द्वैगुणं शर्करास्तु ४९

हस्तस्तम्भतुलादिकान् नरगृहे युञ्ज्यादयुग्मं यथा
युग्मायुग्मकसंख्यया सुरगृहे युञ्जीत हस्तादिकान्
मध्ये द्वारमनिन्दितं सुरमहीदेवक्षितीशालये
शेषाणामुपमध्यमेव विहितं तत् सम्पदामास्पदम् ५०

प्रतेरुपरि वेदिः स्यात् सार्धद्वित्र्यङ्घ्रिणोदयम् ५१

द्वौ षट् चत्वारि कम्पानि पादपादघनानि च
पद्मशैवलपत्रादिचित्राङ्गा वेदिका मताः ५२

कम्पाधस्तात् प्रयोज्या हि स्तम्भास्तत्रैव युक्तितः
ऊर्ध्वाधः कम्पवत् पद्मपट्टिकं चाग्रबन्धनम् ५३

वेदिकोपरि योज्यानि जालकानि विचक्षणैः
त्यक्त्वा भित्त्यङ्घ्रिमध्यं तु चतुर्दण्डान्तविस्तृतम् ५४

द्विदण्डादिनिजव्यासद्विगुणं तुङ्गमीरितम्
सार्धमङ्घ्रियूयनकं वोच्चं त्यक्त्वा मध्याङ्घ्रिरन्ध्रकम् ५५

युग्मायुग्माङ्घ्रिभिः कम्पैर्युक्तं तुङ्गे च वैपुले
गवाक्षं कुञ्जराक्षं च नन्द्यावर्तमृजुक्रियम् ५६

पुष्पखण्डं सकर्णं च योजितव्यं यथोचितम्
दीर्घाश्रं कर्णकच्छिद्रं तद् गवाक्षमिति स्मृतम् ५७

युग्माश्रं कर्णकच्छिद्रं कुञ्जराक्षमिति स्मृतम्
पञ्चसूत्रमयच्छिद्रं प्रदक्षिणवशात् कृतम्  ५८

नन्द्यावर्ताकृतिवशान्नन्द्यावर्तमिति स्मृतम्
स्तम्भतिर्यग्गतं कम्पमृजुत्वात् तदृजुक्रियम्  ५९

पुष्पखण्डं सकर्णं च नन्द्यावर्तं यथोच्यते
भित्तिमध्याद् बहिस्तस्य स्तम्भयोगं कवाटयुक्  ६०

कवाटयुगलं वैकं घाटनोद्धाटन क्षमम्
पादवर्गे भवेद् ग्रीवावर्गे वातायन्स्थितिः  ६१

गुलिकाजालकं धामविन्यासाकृतिरन्ध्रकम्
स्वस्तिकं वर्धमानं च सर्वतोभद्रसन्निभम्  ६२

द्रुमोपलेष्टकाद्रव्यैर्युक्त्या युञ्जीत बुद्धिमान्
जालकं फालकं कुड्यष्टकं च त्रिधा मतम्  ६३

जालकं जालकैर्युक्तमिष्टकामयष्टकम्
फालकं फलकोपेतं भित्तिमध्येऽङ्घ्रिसंयुतम्  ६४

भित्तिबन्धनमूर्ध्वाधःपद्मसङ्घट्टपट्टिकम्
पादपादषडष्टांशबहला फलका भवेत्  ६५

शिबिकाकुड्यवद् वाऽथ सर्वत्र फलकामयम्
एतत् तु फलकाकुड्यं यत् तु यत्र यथोचितम्  ६६

तदेव तत्र योज्यं स्याद् वस्तुविद्याविचक्षणैः  ६७

एवं प्रोक्तं प्रस्तरं वेदिताङ्गं
युक्त्या तज्ज्ञैर्जालकं च त्रिकुड्यम्

नैव च्छेद्या वेदिका जालकार्थं
न प्रत्यङ्गं सर्वतश्छेदनीयम् ६८
इति मयमते वस्तुशास्त्रे प्रस्तरकरणं नाम षोडशोऽध्यायः

## अथ सप्तदशोऽध्यायः

पार्श्वगस्थितशयितद्रव्याणां सन्धिरुच्यते
एकस्मिन् वस्तुनि द्रव्यैर्बहुभिश्च निघट्टनात् १

दुर्बलत्वाद् द्रुमाग्राणामबले बलवर्धनात्
सन्धिकर्म प्रशस्तं स्यात् सजातीयैर्वरद्रुमैः २

मल्ललीलं तथा ब्रह्मराजं वै वेणुपर्वकम्
पूकपर्वं देवसन्धिर्दण्डिका षड्विधाः स्मृता ३

चतुर्दिक्षु बहिः स्थित्वा निरीक्ष्य स्थपतिर्गृहम्
दक्षिणादक्षिणे दीर्घादीर्घाभ्यां सन्धयेत् क्रमात् ४

मध्ये च दक्षिणे चैव यः सन्धिं कर्तुमीहते
मध्येऽतिदीर्घं युञ्जीयाद् दीर्घमल्पं च पूर्ववत् ५

वामेऽवामे समद्रव्यं मध्ये दीर्घमथापि वा
मध्यद्रव्यं विना वामेऽवामे द्रव्यं समं तथा ६

एतत्सन्धिं बहिः कुर्यात् तथैवाभ्यन्तरे विदुः
स्थपतिर्हृदयस्थाने स्थित्या प्रेक्ष्य चतुर्दिशि ७

दीर्घमल्पं समद्रव्यं पूर्ववत् परिकल्पयेत्
आधाराधेयनीत्यैव द्रव्यसन्धानमूह्यताम् ८

मूले मूलं न युञ्जीयादग्रे चाग्रं तथैव च
मूलाग्रद्रव्ययोगेन सन्धिकर्म सुखप्रदम् ९

मूलं हि शयितं चाधश्चाग्रमूर्ध्वे तु योजयेत्
द्विद्रव्यमेकसन्धि स्यान्मल्ललीलमिति स्मृतम्  १०

त्रिद्रव्यैस्तु द्विसन्धि स्याद् ब्रह्मराजमितीरितम्
चतुर्भिः पञ्चभिर्द्रव्यैस्त्रिचतुः सन्धयः क्रमात्  ११

वेणुपर्वमिति प्रोक्तं तैतलानां नृणां गृहे
षड्भिस्तु सप्तभिर्द्रव्यैः सन्धयः पञ्च षट् क्रमात्  १२

पूकपर्वेति तत् प्रोक्तं धनधान्यकरं स्मृतम्
अष्टभिर्नवभिर्द्रव्यैः सन्धयः सप्त वाऽष्टधा  १३

देवसन्धिरिति प्रोक्तः सर्ववासेषु योग्यतः
बहुसन्धिर्बहुद्रव्यैर्दीर्घमल्पं च पूर्ववत्  १४

दण्डकेति समाख्याता धनधान्यसुखप्रदा
दक्षिणापरभागे तु द्रव्यमूलं प्रशस्यते  १५

अग्रमग्रं तथैशान्ये तेषां बन्धनमुच्यते
आधारं प्रथमं प्राच्यां मूलाग्रच्छेदनान्वितम्  १६

दक्षिणोत्तरयोरग्रं तस्योपरि निधापयेत्
दक्षिणोत्तरयोर्मूलमूर्ध्वच्छेदनसंयुतम्  १७

पश्चिमस्थमधश्छेद्यं ह्येप्यमाधेययोगतः
एतत् तु सर्वतोभद्रमवागादि तथा विदुः  १८

नन्द्यावर्तविधानेन नन्द्यावर्तं प्रकल्पयेत्
दक्षिणोत्तरगं दीर्घं दक्षिणे तु सकर्णकम्  १९

प्राक्प्रत्यग्गतमायामं पश्चिमे तु सकर्णकम्

दक्षिणोत्तरगं दीर्घमुत्तरे तु सकर्णकम् २०

पूर्वपश्चिमगं दीर्घं पूर्वायां तु सकर्णकम्
आधाराधेयनीत्यैव पूर्वादीनि च विन्यसेत् २१

नन्द्यावर्तमिदं तद्वदवागादीनि च क्रमात्
पक्षयोर्बहुभिर्द्रव्यैर्दीर्घं प्रागुदगग्रकम् २२

सशिखैश्च बहुद्रव्यैर्द्वाभ्यां वा तिर्यगग्रकम्
स्वस्त्याकृतिसमायुक्तं स्वस्तिबन्धनमिष्यते २३

परितो बहुभिर्द्रव्यैर्युक्तं तद्वत् तदन्तरे
मध्येऽङ्कणसमायुक्तं बाह्ये युक्त्या सभद्रकम् २४

पूर्वद्रव्यं परद्रव्यं भद्रकं दक्षिणोत्तरम्
शालानां भित्तिमाश्रित्य युक्त्या साधु समाचरेत् २५

एवं युञ्ज्यादिदं बन्धं वर्धमानमितीरितम्
अधोभूमिक्रियायुक्त्या स्यादूर्ध्वोर्ध्वतलं प्रति २६

विपरीतं विपत्त्यै स्यादिति शास्त्रविनिश्चयः
दीर्घादीर्घेषु संयोगद्रव्यसन्धानतर्पणम् २७

यथाबलं यथायोगं तथा योज्यं विचक्षणैः
एवं विधिविशिष्टं स्यात् सम्पत्त्यै द्रव्यबन्धनम् २८

मेषयुद्धं त्रिखण्डं च सौभद्रं चार्धपाणिकम्
महावृत्तं च पञ्चैते स्तम्भानां सन्धयः स्मृताः २९

षट्शिखा झषदन्तं च सूकरघ्राणमेव च
सङ्कीर्णकीलं वज्राभं पञ्चैव शयितेष्वपि ३०

स्वव्यासकर्णमध्यर्धद्विगुणं वा तदायतम्
त्र्यंशैकं मध्यमशिखं मेषयुद्धं प्रकीर्तितम्  ३१

स्वस्त्याकारं त्रिखण्डं स्यात् सत्रिचूलि त्रिखण्डकम्
पार्श्वे चतुःशिखोपेतं सौभद्रमिति संज्ञितम्  ३२

अर्धं छित्त्वा तु मूलेऽग्रे चान्योन्याभिनिवेशनात्
अर्धपाणिरिति प्रोक्तो गृहीतघनमानतः  ३३

अर्धवृत्तशिखं मध्ये तन्महावृत्तमुच्यते
वृत्ताकृतिषु पादेषु प्रयुञ्जीत विचक्षणः  ३४

स्तम्भानां स्तम्भदैर्घ्यार्धादधः सन्धानमाचरेत्
स्तम्भमध्योर्ध्वसन्धिश्चेद् विपदामास्पदं सदा  ३५

कुम्भमण्ड्यादिसंयुक्तं सन्धानं सम्पदां पदम्
सालङ्कारे शिलास्तम्भे यथा योगं तथाचरेत्  ३६

स्थितस्य पादपस्याङ्गप्रवृत्तिवशतो विदुः
ऊर्ध्वमूलमधश्चाग्रं सर्वसम्पद्विनाशनम्  ३७

अर्धपाणिद्विललाटे लाङ्गलाकारषट्शिखा
घनमध्यस्थकीला या सा मता षट्शिखाह्वया  ३८

स्वायामतिर्यग्बाहुस्थशिखं तु झषदन्तकम्
ऊर्ध्वाधस्ताद् यथायोग्यं यथाबलशिखान्वितम्  ३९

सूकरघ्राणमित्युक्तं सूकरघ्राणसन्निभम्
यथाबलं यथायुक्ति नानाबलशिखान्वितम्  ४०

नानाकीलैस्तु सङ्कीर्णं स्यात् तु सङ्कीर्णकीलकम्

वज्राकृतिशिखं नाम्ना वज्रसन्निभमेव तत् ४१

एतस्मिन् पङ्क्तिसन्धाने सन्धिरेकाकृतिर्भवेत्
उपर्युपरि चैवं स्याद् विपरीते विपत्करम् ४२

अन्तर्मूलं बहिश्चाग्रं पार्श्वद्रव्येषु योजयेत्
अन्तरग्रं बहिर्मूलं स्वामिनश्च विनाशनम् ४३

शिखा दन्तं च शूलं च विद्धं पर्यायमीरितम्
शल्यं च शङ्कुरणिश्च कीलं पर्यायमुच्यते ४४

अष्टसप्तकषडंशकेऽङ्घ्रिके भागतारमथ शूलकीलयोः
कीलपार्श्वमथ पादमध्यमं योजयेत् सममुदग्रबुद्धिमान् ४५

स्तम्भान्तं दन्तान्तकं चेद् विनाशं दन्तान्तं चेत् स्तम्भमध्यं तदेव
स्तम्भान्तं चेत् सन्धिमध्यं सरोगं सन्धेर्मध्यं पादमध्यं क्षयं स्यात् ४६

दिग्विदिग्द्वारदेवांशं सर्वं त्यक्त्वा प्रयोजयेत्
अर्कार्किवरुणेन्दूनां स्थानं दिगिति कीर्तितम् ४७

अग्निराक्षसवाय्वीशस्थानं विदिगिति स्मृतम्
गृहक्षतश्च पुष्पाख्यो भल्लाटश्च महेन्द्रकः ४८

एतेषामंशकद्वारं तत्र सन्धिं न सन्धयेत्
शल्यं च दन्तं त्यक्त्वैव पूर्वोक्तानां च सम्मतम् ४९

मध्यार्धमध्यमध्यं च त्यक्त्वा युञ्जीत बुद्धिमान्
द्रव्यमध्यस्थसूत्रस्य वामेऽवामे तु दन्तकम् ५०

द्रव्यविस्तारमध्यस्था शिखा शीघ्रविनाशिनी
अन्योन्यसन्धिविद्धं च शिखा कीलस्य वेधनम् ५१

धर्मार्थकामसौख्यानां विपत्तिं नित्यमादिशेत्
वामदक्षिणयोगेन प्रतिसन्धि परित्यजेत् ५२

तारतीव्रान्तरस्थं यत् कल्प्यशल्यमिति स्मृतम्
पूर्ववद् विधिना सन्ध्यायाममध्ये तु योजयेत् ५३

अज्ञानात् त्वरयानुक्तस्थाने वा योजयेद् यदि
सर्वेषामपि वर्णानां सर्वसम्पत्क्षयो भवेत् ५४

पुराणैर्न नवद्रव्यैर्न पुराणैर्नवैरपि
नवैर्नवानां द्रव्याणां योगो जीर्णैश्च जीर्णिनाम् ५५

युक्त्यैव द्रव्यसन्धानं सम्पदामास्पदं सदा
विपरीते विनाशाय भवेदेवेति निश्चयः ५६

ऊर्ध्वद्रव्याणि सर्वाणि वाजनादीनि यान्यपि
सशिखान्यशिखान्येतान्युक्त्या योज्यानि पूर्ववत् ५७

पादोपरि भवेत् सन्धिरन्तरे नैव कारयेत्
ब्रह्मस्थलोर्ध्वगद्रव्यसन्धानं विपदां पदम् ५८

ब्रह्मस्थानस्थितः स्तम्भः स्वामिनश्च विनाशनम्
तुलादीन्युपरिद्रव्याण्यत्र दोषो न विद्यते ५९

पुंस्त्रीनपुंसकमहीरुहसन्धिकार्ये पुंसा च पुंविहितमेव तथैव पुंस्त्री
नैवोभयेन च नपुंसकसङ्गमः स्याज्ज्ञात्यैकया शुभद उक्तविधिक्रमं वा
६०

एवं युक्त्या द्रव्यसन्धानयोगं प्रोक्तं नृणां तैतिलानां निवासे
युक्त्या युक्तं सम्पदामास्पद तद्युक्त्यायुक्तं सर्वसम्पत्क्षयं स्यात् ६१

छिद्रं स्वल्पतरं विधेयमधुना दीर्घान्वितच्छेदनं
स्थूलं काष्ठशिलेभदन्तमुदितं निम्नं हि पक्वेष्टकम्
पक्वं निर्गमनं सुधाभिरनिशं कुर्यात् तनुत्वं यथा
पूर्वं मानसमुन्नयेत् तदपरं शिल्प्युत्तमः शातधीः ६२

इति मयमते वस्तुशास्त्रे सन्धिकर्मविधानो नाम सप्तदशोऽध्यायः

## अथाष्टादशोऽध्यायः

गलभूषणमेतेषां शिरश्छन्दमथाधुना
लुपामानं च वक्ष्येऽहं स्थूपिकालक्षणं क्रमात् १

वेदिकाद्विगुणोत्सेधं कन्धरं शिखरोदयम्
तद्द्विद्वत्रिगुणतुङ्गं वा वेदिकोच्चं तु वा गलम् २

गर्भभित्तित्रिभागैकमङ्घ्रेर्वेद्यङ्घ्रिवेशनम्
ग्रीवावेशं ततस्तावदेवं दैवे च मानवे ३

पञ्चांशे भित्तिविष्कम्भे भागो वेद्यङ्घ्रिवेशनम्
ग्रीवावेशं ततस्तावच्चतुरंशे तथैव च ४

एवं त्रिविधनीत्या तु ग्रीवा साध्या प्रयत्नतः
उत्तरं वाजनं चैव मुष्टिबन्धं मृणालिका ५

दण्डिकावलयं चैव गलभूषणमिष्यते
मुष्टिबन्धोपरि क्षिप्तव्यालनाटकमूर्ध्वतः ६

दण्डिका च विधातव्या तदूर्ध्वे शिखरक्रिया
शिखरोत्सेधमात्तोच्चा भागमानवशेन वा ७

दण्डिकावधिविस्तारं पञ्चांशं द्व्यंशमानकम्
सप्तनन्दशिवांशे तु त्रयोदशतिथौ तथा ८

सप्तदशांशके बन्धवेदभूतषडंशकम्
सप्ताष्टांशं तु तारार्धमित्यष्टौ शिखरोदयाः ९

पाञ्चालं चापि वैदेहं मागधं चापि कौरवम्
कौसलं शौरसेनं च गान्धारावन्तिकं तथा १०

यथाक्रमेण नामानि ज्ञातव्यानि विचक्षणैः
जघनाद् बहिरेवैते एकाः सर्वे समाहिताः ११

सर्वे ते तैतलानां स्युरर्धादधस्तु मानुषम्
तद्दशाद्यासप्तदशभागादेकांशवर्धनात् १२

आवन्तिका प्रभृत्यूर्ध्वमष्टाविष्टलुपोदयाः
व्यामिश्रं च कलिङ्गं च तथा कौशिकमेव च १३

वराटं द्राविडं चैव बर्बरं कोल्लकं पुनः
तथा शौण्डिकमित्येते व्यामिश्रादिलुपोदयाः १४

देवानां प्रथितान्येव पाषण्ड्याश्रमिणामपि
चतुरश्रं च वृत्तं च षडश्राष्टाश्रमेव च १५

द्वादशाश्रं द्विरष्टाश्रं पद्मकुड्मलसन्निभम्
तथामलकपक्वाभं दीर्घवृत्तं च गोलकम् १६

अष्टाश्राद्यष्टधाराणि हर्म्यादीनां शिरांसि हि
षडाद्याषष्टिकर्णं च सम्मतं शिखराकृतिः १७

तदुच्छ्रयचतुष्पञ्चभागं स्यात् पद्मतुङ्गकम्
तत्समोच्चत्रिभागा वा तदूर्ध्वे स्थूपिकायतिः १८

अल्पीयसी शिरोर्धा वा भागोच्चा वा त्रिभागिके

सङ्क्षेपात् स्थूपिकाभूषा ह्युपरिष्टात् प्रकाश्यते १९

पञ्चाद्येकादशान्ताश्च चतुराद्या दशान्तकाः
चतुर्विधा लुपासंख्या देवेऽदेवे निकेतने २०

पूर्वोक्तं ह्यन्तरोच्चं तु व्यामिश्रं नाम पुष्करम्
ऊर्ध्वस्थान्यप्यधस्थानि पुष्कराण्यर्धमानतः २१

अर्धमारभ्य संवर्त्यपश्चादुक्तोच्चसीमयुक्
आरोह्याण्यवरोह्याणि गुह्यमेतदुदाहृतम् २२

दण्डकावधि ताराधं चतुरश्रीकृतं समम्
कोष्णीषासन सीमाख्यसूत्रयुक्तं खलं नयेत् २३

दण्डकोत्तरबाहुल्यं सूत्रयेदासनादधः
आसने चतुरंशाद्यादशांशं बिन्दु विन्यसेत् २४

कोष्णीषसन्धेस्तद्बिन्दु सीमच्छायोच्चमावहेत्
छायोच्चायतमानानि कमूलादासने न्यसेत् २५

तान्येव दण्डकादीनां पर्यन्तानि भवन्ति हि
कोष्णीषसङ्गात् पर्यन्तबिन्द्वन्तं तल्लुपायतम् २६

तत्तत्पर्यन्तविस्तारं कसूत्रे विन्यसेत् पुनः
स्वस्वकर्णगतच्छायामानैः सर्वान् विमानयेत् २७

तत्तत्पर्यन्तसूत्राणि मल्लपर्यन्तसूत्रवत्
एवं मध्य लुपा सीम्नो वर्धन्ते वर्णसंख्यया २८

एवमावर्त्य तत्पश्चादारोह्यैवावरोह्य च
तत्तत्पुष्करसञ्जातं तत्तन्मल्लायतं विदुः २९

समध्यं च विमध्यं च लुपाकलनमेव हि
मध्यं च मध्यकर्णं चाप्याकर्णमनुकोटिकम्  ३०

कोटिरित्येवमुच्यन्ते पञ्च वर्णलुपाः क्रमात्
युग्मांशेऽयुग्मसंख्याभिरयुग्मे युग्मसंख्यया  ३१

कान्तान्तरासिकोष्णीषसीमान्तं स्वांशसंख्यया
चूलिका भ्रमणीया हि समयासमया च सा  ३२

तत्तत्सूत्रात् स्थिता दन्तस्तनसूत्राणि सूत्रयेत्
शयितसूत्रादधः पृष्ठवंशसूत्राणि सूत्रयेत्  ३३

शयितस्थितसूत्रान्तः कीलं तत्कूटमूर्धनि
निधायार्धेन्दुवत् सर्वाश्चूलिका विलिखेत् समाः  ३४

लुपाविलुपमध्यान्तर्गता सा चूलिकाकृतिः
एवं स्याद् ऋजुकार्यं हि तथा कुक्कुटपक्षवत्  ३५

बालकूटस्य विस्तारस्थितसूत्रस्तनान्तरे
कूटमध्यमसूत्रं तु वलयच्छिद्रमध्यगम्  ३६

पर्यन्तसूत्रकादन्तर्दण्डकोत्तरजा ततिः
तदन्तर्जानुकव्यासस्तदन्तश्चूलिकास्थितिः  ३७

लुपातारं तु दण्डं वा सपादं सार्धमेव वा
विस्तारत्रिचतुष्पञ्चभागैकांशं तु तद्धनम्  ३८

जानुव्यासं चोत्तरार्धचूलिकार्धार्धमेव वा
दण्डकाविपुलं तावत् त्रिपादार्धं तु तद्धनम्  ३९

वलयं जानुनीव्रं च दण्डकाविपुलार्धतः

मल्लमध्यादि चामीली जानुकालम्बनं च यत् ४०

पर्यन्तजानुकान्तं च चूलिकाभाग एव सः
शयनात् तावदेव स्यान्नीव्रालम्बनसूत्रकम् ४१

कुठारिकाललाटं च जघनं च समं मतम्
पादविष्कम्भकर्णो वा विष्कम्भद्विगुणोऽथ वा ४२

कूटव्यासो लुपापिण्डी कर्णस्तद्द्विगुणायतः
तदर्धं नालिकालम्बमूर्ध्वे मल्लाग्रसङ्गतिः ४३

छिद्रं तत्तीव्रमात्रं स्यान्मल्लानां तु प्रवेशनम्
जानुकं च लुपामध्यं मध्यपृष्ठस्थवंशकम् ४४

समं स्यात् तीव्रताराभ्यां चूल्यंशो वा लुपान्तरम्
लुपातीव्राष्टगुणं वा वलयो वंशविस्तरः ४५

तदर्धं वेशनं तीव्रं फलकैर्लोहलोष्टकैः
मृण्मयैस्तु यथास्थैर्यमिच्छया छादयेत् पुनः ४६

लुपोर्ध्वे फलकान् न्यस्य वाष्टबन्धमधोर्ध्वतः
लुपामध्यादधश्छिद्रं वलयस्य विधीयते ४७

क्रियायां परलेखास्तु कल्प्याः षोडशसंख्यया
कुक्षिव्यासाष्टभागैकं मात्रामानमिति स्मृतम् ४८

तेन भागेन सप्तार्धाद् द्व्यर्धभागविवर्धनात्
आपञ्चदशसंख्यान्ताः परलेखास्तु षोडश ४९

लुपाध ऊर्ध्वबिन्द्वादि मध्ये विन्यस्य तद्विधिम्
तद्बिन्द्वादि विलोक्या हि परलेखा विचक्षणैः ५०

प्रासादानामिमाः प्रोक्ता गृहादीनां च षोडश
लुपायामाद्याद्विगुणं तन्मानं तेन बुद्धिमान्  ५१

कोष्णीषासन सूत्राभ्यामधः शफरमालिखेत्
तस्मादुपरि मल्लस्य लेखयेत् तद्विचक्षणः  ५२

मल्लायतादधोभागे त्रिः पञ्चांशीकृतेः क्रमात्
तत्तदंशावसानं तु मत्स्यं तत्तत् समुल्लिखेत्  ५३

सर्वासां परलेखानां क्रमोऽयं परिकीर्तितः
पाञ्चालादिलुपानां च प्रत्येकं प्रोच्यते बुधैः  ५४

ऋृजाकार्ययुता मल्लाद् या लेखासनकाग्रयोः
मध्ये परं हि सा प्राज्ञैः परलेखा प्रकीर्तिता  ५५

लुपाबाहुल्यमानेन घटिकां चतुरश्रिकाम्
वितस्त्यायामिनीमृज्वीं कृतमध्यमसूत्रिताम्  ५६

चूलिकान्तर्वर्णलुपातिर्यक् सूत्रस्वमध्यमात्
विन्यस्य घटिकां पश्चाच्छिन्नां शमनसूत्रवत्  ५७

प्रतिवर्णं तु घटिकां तद्वर्णे तां निधापयेत्
क्षिप्तसूत्रस्य शेषांशच्छिन्ने वर्णलुपोदरे  ५८

दण्डकोत्तरवलयस्थितसूत्रसमं लिखेत्
उदरायाममध्ये तु लिखिते ककरं भवेत्  ५९

हटिकाललाटमध्यं ककरं च समं यथा
तथा निधाय घटिकां लुपोदरवशायताम्  ६०

तल्ललाटकृतिच्छेद्या वलयाद्या लुपोदरे

इष्टपार्श्वे क्षिपेच्छायां छिद्रैश्च वलयस्य तु ६१

तत्तद्धटिकया तत्तन्मध्यसंहितमध्यया
या ललाटगतच्छाया तासां तासां तु सा भवेत् ६२

दण्डिकावलयच्छिद्रस्तनजानूत्तरादिषु
शिरोमध्येऽर्धमध्ये च न्यसेन्पुण्डतुलोपरि ६३

विटभागशिखोपेततुलापादः सवंशहृत्
सवर्णा मत्स्यबन्धाश्च खर्जूरपत्रसन्निभाः ६४

सवलयद्यो विधातव्या लुपाः शिखरकान्तरे
लुपोर्ध्वे फलकं वोर्ध्वे तस्याः कम्पं निधाय च ६५

इष्टकासुधया वाऽपि प्रच्छादनमलङ्क्रियात्
स्थूपिकाकीले दीर्घं च पादोत्सेधसमं मतम् ६६

अर्धार्धमग्रविस्तारं दण्डार्धं मूलविस्तृतम्
आशङ्कुमूलमुण्डान्तं तस्य मूलस्य वेधनम् ६७

वंशाधस्तान्निधातव्या मण्डनागाग्रपट्टिका
बालकूटस्तनं शङ्कुमूलमुण्डकमेव च ६८

अन्तः स्थवलयं वर्णपट्टिका च सनालिका
मत्स्यबन्धनखर्जूरपत्रमल्लनिबन्धनात् ६९

वलद्यस्वस्तिधाराभिः शिखरान्तरलङ्क्रियात्
विस्तारो मुखपट्ट्याश्च दण्ड्यो वाध्यर्ध एव वा ७०

नीप्रं षडष्टभागं वा कर्णिकोच्चं तु तत्ततिः
शक्तिध्वजस्य मूलस्य विपुलं दण्डमानतः ७१

तत्कराठं तावदेवोच्चं सपादं सार्धमेव वा
ग्रीवान्तगग्रपत्रं तु स्तम्भव्यासार्धतुङ्गवत्  ७२

द्विदराडादित्रिदराडान्तमन्तरं गग्रपत्रयोः
वाताहतचलच्चारुलतावत् कर्णिकाक्रिया  ७३

अर्धकर्णमधस्तस्माच्छिरोऽर्धार्धेन चानतिः
ग्रीवोपरि कपोलान्तं त्रिदराडं सार्धमेव वा  ७४

तावच्छक्तिध्वजान्तं स्यात् सपत्रं वा सशूलकम्
नेत्रसंश्लिष्टमल्लं तु चूलिकास्तनमराडलम्  ७५

शयितस्थितपट्टाभ्यां मृणाल्यादिविभूषितम्
अर्धकर्णोर्ध्वपट्टोर्ध्वप्रत्यूर्ध्वे मुष्टिबन्धनम्  ७६

यथोशोभननिष्क्रान्तं त्रिमुखं स्यात् तदूर्ध्वतः
शूलाभं मतलाभं वा सव्यालं वा सनाटकम्  ७७

तदूर्ध्वे कूटकोष्ठादिमरिडतं स्याद् विमानवत्
सपट्टन्नुद्रकम्पाङ्गं मध्यतोरणमेव वा  ७८

तोरणाभ्यन्तरे लद्मीः साभिषेकाम्बुजासिका
एवंविधैरथान्यैश्च मराडनीया ललाटिका  ७९

ललाटवंशसंविद्धमध्यशूलदृढिकृता
स्तम्बविस्तारविस्तीर्णा विधातव्या कुठारिका  ८०

तत्कर्णे पत्रमकरं मरिडतं चावलम्बितम्
अर्धकर्णेन चार्धं वा यथायुक्ति यथारुचि  ८१

अन्तर्गतलुपातिर्यगग्रबन्धनविष्टकम्

तदूर्ध्वे तेन निर्विद्धं स्थूपिका यूपमिष्यते ८२

पूर्वोक्तं स्थूपिकामानमलङ्कारमथोच्यते
सार्धमर्धं तदूर्ध्वेऽर्धमर्धमशं शरांशकम् ८३

त्र्यंशमर्धं च भागं स्यादर्धमंशं तथार्धकम्
भागमर्धं तथार्धांशमंशमर्धं यथार्धकम् ८४

चतुरर्धं क्रमेणैवोत्तुङ्गे द्वाविंशदंशके
पद्मं च क्षेपणं वेत्रं क्षेपणं पङ्कजं घटम् ८५

पङ्कजं क्षेपणं धृक् च क्षेपणं वेत्रमूर्ध्वतः
क्षेपण् धृक् च कम्पं तु पद्मं फलकमम्बुजम् ८६

वेत्रं च मुकुलं चैव क्रमेणोक्तवशान्नयेत्
सप्तद्व्यंशत्रिकद्व्यंशैः पञ्चनन्देन्द्रियत्रिकैः ८७

द्वित्रिवेदत्रिकद्व्यंशैर्गुणपञ्चर्तुपञ्चभिः
द्वित्रिभागैः क्रमाद् व्यासं मूलपद्मादिषु न्यसेत् ८८

मुकुलाग्रमंशमर्धार्धं यथाशोभवशान्नयेत्
चतुरष्टद्विरष्टाश्रं साधारं वर्तुलं तु वा ८९

तदाकृतिः शिरश्छन्दमलङ्कारवशात् तु वा
तदाकृतिः सुरोर्वीशविप्राणां च विशां मतम् ९०

सुरद्विजनृपाणां तु वैश्यानां नैव शूद्रके
तत्सम्बन्धं समापाद्य ध्वजदण्डं तदूर्ध्वगम् ९१

एवंलक्षणसम्पन्नं विमानं सम्पदां पदम्
करालमुद्गी गुल्माषकल्कचिक्कणसाह्वयाः ९२

चूर्णोपयुक्ताः पञ्चैते सर्वकर्मसनातनाः
अभयाक्षबीजमात्रशर्कराः स्युः करालकाः ९३

मुद्गबीजसमा क्षुद्रशर्करा मुद्गमिष्यते
सार्धत्रिपादद्विगुणकिञ्जल्कसिकतान्वितम् ९४

चूर्णस्य शर्कराशुक्त्योर्यद् गुल्माषं तदुच्यते
करालं चापि मुद्गीं च तेन मानेन योजयेत् ९५

पूर्वोक्तमात्रसिकताचणकश्चूर्णमानतः
क्रियार्थं पेषितं कल्कं चिक्कणमस्तु केवलम् ९६

निश्छिद्रमिष्टमानेन गोत्रमिष्टकया दृढम्
पूर्वोक्तानां च पञ्चानां विधातव्यं पृथक् पृथक् ९७

तत्र तत्र तदुक्तेन द्रव्येण परिकल्पयेत्
केवलेनाम्भसा पूर्वं पूर्वांस्त्रिस्त्रिः प्रकुट्टयेत् ९८

क्षीरद्रुमकदम्बाम्राभयाक्षत्वग्जलैः पुनः
त्रिफलोदैस्ततस्तद्वन्माषयूषैस्ततस्तथा ९९

संयम्य शर्कराशुक्तिं चूर्णं तत्खातवारिणि
खुरसङ्कुट्टनं कृत्वा स्रावयित्वाऽथ वाससा १००

कल्कं च चिक्कणं तेन कल्कनीयं विचक्षणैः
दधिदुग्धमाषयूषगुडाज्यकदलीफलैः १०१

जलैश्च नालिकेरस्य चूतपक्वरसैः सह
कल्पितं शिल्पिभिर्यत् तद् बन्धोदकमिति स्मृतम् १०२

शुद्धिं शुद्धोदकेनादौ कृत्वा बन्धाम्भसा ततः

आलिप्य सुधया कार्या नानारूपान्वितक्रिया १०३

दग्धैश्च मृण्मयैश्चापि लोहलोष्टैर्यथोचितम्
गोपानस्योपरिष्टात् तु च्छादनीयं विचक्षणैः १०४

करालच मुद्गिगुल्माषघनमेकैकमङ्गुलम्
कल्कमानं तदर्धेन तदर्धार्धं तु चिक्कणम् १०५

जलस्थलप्रयुक्ते तु यथेष्टं घनमिष्यते
षण्मासमुत्तमं प्रोक्तं चतुर्मासं तु मध्यमम् १०६

अधमं तु द्विमासं स्यादेषामुषितमिष्यते
ततो बन्धोदकैरेतान् संक्लेद्य क्रमशः कृतिः १०७

लुपोपरीष्टकास्तारे चैवं चूर्णक्रियां पुनः
आच्छादनीयं यत्नेन तद्धनं छादनं विदुः १०८

देवानां च द्विजानां चावासे योग्यं सनातनम्
बहिरन्तश्च सर्वेषां चित्रं युञ्जीत बुद्धिमान् १०९

सुमङ्गलकथोपेतं श्रद्धानृत्तक्रियान्वितम्
विप्रादीनां च वर्णानां निवासं सम्पदां पदम् ११०

संग्रामं मरणं दुःखं देवासुरकथान्वितम्
नग्नं तपस्विलीलां चामयाव्यादि न योजयेत् १११

अन्येषामन्यथा वासे साधनीयं यथेष्टतः
पञ्चांशं माषयूषं स्यान्नवाष्टांशं गुडं दधि ११२

आज्यं द्व्यंशं तु सप्तांशं क्षीरं चर्म षडंशकम्
त्रैफलं दशभागं स्यान्नालिकेरं युगांशकम् ११३

क्षौद्रमेकांशकं त्र्यंशं कदलीफलमिष्यते
लब्धे चूर्णे दशांशे तु युञ्जीतव्यं सुबन्धनम्  ११४

सर्वेषामधिकं शस्तं गुडं च दधि दुग्धकम्
चूर्णाद्व्यंशं करालं मधुघृतकदलीनालिकेरं च माषं
शुक्तेस्तोयं च दुग्धं दधिगुडसहितं त्रैफलं तत् क्रमेण
लब्धे चूर्णे शतांशेऽशकमिदमधुना चानुवृद्धिं प्रकुर्या-
देतद् बन्धं दृषत्सादृशमिति कथितं तन्त्रविद्भिर्मुनीन्द्रैः  ११५

देवानां द्विजभूमीशवैश्यानां भवनेऽधुना  ११६

मूर्ध्नेष्टका विधातव्याश्चतस्रो लक्षणान्विताः
सुस्निग्धाः समदग्धाश्च सुस्वनास्ताः सुशोभनाः  ११७

स्त्रीलिङ्गाश्चापि पुल्लिङ्गा भिन्नच्छिद्रदिवर्जिताः
विस्तारायामतीव्रैस्तु प्रथमेष्टकया समाः  ११८

शिलामये शिला प्रोक्ता सर्वदोषविवर्जिता
जन्माद्याशिखरान्तं च यैर्द्रव्यैश्च विनिर्मितम्  ११९

तैरेवादौ तथान्ते च न्यस्तव्याश्चेष्टकाः शुभाः
मिश्रद्रव्यैश्च सङ्कीर्णे यैर्द्रव्यैरुपरि स्थितम्  १२०

तैरेव मूर्ध्नि विन्यासं रहस्यमिदमीरितम्
लोहजं दारुजं वाऽपि स्थूपिकाकीलमिष्यते  १२१

ऊर्ध्वभूम्यङ्घ्रिणायामविस्तारं पादतः समम्
अग्रमङ्गुलविस्तारमानुपूर्व्या कृशं तथा  १२२

चतुरश्रसमं कुर्यात् त्रिभागैकमधस्तथा
वृत्तमूर्ध्वमधः कुर्याच्छिखिपादं न्यसेदधः  १२३

विस्तारत्रिगुणायामं व्यासोच्चं पदतः समम्
अभ्रमं तु यथा भूमौ पञ्चमूर्तिसमन्वितम् १२४

अथवा तच्छिखायामद्विगुणं कीलदैर्घिकम्
स्तम्भव्यासार्धविस्तारत्रिचतुर्भागमेव वा १२५

अग्रमर्धाङ्गुलव्यासं शिखिपादं यथाबलम्
शिखराकृतिवत् कीलं लिङ्गच्छन्दमथापि वा १२६

एवं त्रिधा समुद्दिष्टं स्थूपिकाकीलमार्यकैः
सद्मनश्चोत्तरे पार्श्वे मण्डपे तु सुसंस्कृते १२७

चतुष्प्रदीपसंयुक्ते वस्त्रैश्च परिवेष्टिते
सर्वमङ्गलसंयुक्ते शुद्धशाल्यास्तरे शुभे १२८

स्थण्डिले चाण्डितं कृत्वा मण्डूकं वाथ तत्परम्
विन्यस्य देवान् ब्रह्मादीन् श्वेततण्डुलधारया १२९

आराध्य गन्धपुष्पाद्यैर्भुवनाधिपतिं जयेत्
देवताभ्यो बलिं दत्त्वा तत्तन्नाम्ना यथाविधि १३०

स्थपतिः कलशान् न्यस्य पञ्च पञ्च सलक्षणान्
सुगन्धोदकसम्पूर्णान् पञ्चरत्नसमायुतान् १३१

ससूत्रान् वस्त्रकूर्चालान् सापिधानान् सहेमकान्
उपपीठांशदेवानां स्वस्वनाम्नाभिधाय च १३२

प्रणवादिनमोन्तेन गन्धाद्यैरर्चयेत् क्रमात्
प्रक्षाल्य पञ्चगव्यैस्तु नवरत्नकुक्शोदकैः १३३

इष्टकाश्च यथाकीलं सूत्रैरावेष्टयेत् क्रमात्

कुम्भस्य दक्षिणे शुद्धशालीस्थण्डिलमण्डले १३४

आराध्य गन्धपुष्पैश्च बलिं दत्त्वा यथाविधि
इष्तकाश्चैव कीलांश्च वेष्टयेदम्बरैः शुभैः १३५

श्वेतवस्त्रास्तरस्योर्ध्वे न्यसेद् दर्भास्तरे शुचिः
स्थपतिर्वरवेषाढ्यः शुक्लमाल्यानुलेपनः १३६

सितवस्त्रपरिच्छिन्नोत्तरीयो हैममुद्रिकः
पीत्वा शुद्धं पयो रात्रावुपोष्याधिवसेत् सुधीः १३७

कलशस्योत्तरे पार्श्वे सितवस्त्रपरिस्तरे
ततः प्रभाते विमले नक्षत्रकरणान्विते १३८

सुमुहूर्ते सुलग्ने च स्थपतिः स्थापकेन तु
पुष्पकूण्डलहारादिकटकैरङ्गुलीयकैः १३९

पञ्चाङ्गभूषणैर्हेमनिर्मितैस्तु विभूषितः
हेमयज्ञोपवीतस्तु नववस्त्रपरिच्छदः १४०

श्वेतानुलेपनश्चैव सितपुष्पशिराः शुचिः
ध्यात्वा धरातलं सर्वं दिग्द्विपेन्द्रसमायुतम् १४१

ससागरं सशैलेन्द्रमनन्तस्योपरि स्थितम्
सृष्टिस्थितिलयाधारं भुवनाधिपतिं जपेत् १४२

स्नापयित्वेष्टकाकीलं पूर्वोक्तैः कलशोदकैः
आराध्य गन्धपुष्पैश्च धूपदीपसमन्वितैः १४३

बलिं दत्त्वा यथान्यायं जयशब्दादिमङ्गलैः
बिप्रस्वाध्यायघोषैश्च शङ्खभेर्यादिनिःस्वनैः १४४

स्थापयेदिष्टकाः सम्यक् पूर्वदक्षिणतः क्रमात्
शिखरार्धे विमनस्य गग्रपत्रान्तरेऽपि वा १४५

शिखरत्रिचतुर्भागावसाने वाम्बुजदधः
तदाद्यात् स्थूपिकायामात् कीलदैर्घ्यं प्रगृह्यताम् १४६

पूर्वमेवेष्टकास्थानं निश्छिद्रं तु दृढीकृतम्
तन्मध्ये नवरत्नानि विन्यसेच्च यथाक्रमम् १४७

ऐन्द्रे मरकतं विद्याद् डूर्यं वह्निगोचरे
इन्द्रनीलं तु याम्यायां मौक्तिकं पितरि स्मृतम् १४८

वारुणे स्फाटिकं विद्यन्महानीलं समीरणे
वज्रं तु सौम्यदेशे स्यादैशान्यां तु प्रवालकम् १४९

माणिक्यं मध्यमे भागे हाटकं च विनिक्षिपेत्
रसोपरसबीजैश्च धान्यान्यप्यौषधानि च १५०

तदूर्ध्वे स्थूपिकाकीलं स्थापयेदचलं समम्
तस्मात् प्रकृतिभूम्यन्तमुदग्दिशि महाध्वजम् १५१

ग्रथितं क्षौमवस्त्रैश्च कार्पासैर्वा मनोहरैः
लम्बयेत् तदुदक्प्राच्यौ प्रागुदग्विदिशं ततः १५२

संस्पृशेद् यदि सर्वेषां प्राणिनां सम्पदृद्धये
भवनं स्थूपिकीलं च पट्टैरवेष्ट्य शुभ्रकैः १५३

चतुर्दिक्षु चतुर्गाश्च सवत्साः सन्निवेशयेत्
द्वारालङ्करणं कुर्यात् सुविचित्राम्बरैर्नवैः १५४

यजमानो विशुद्धात्मा प्रणम्य शिरसा गुरुम्

विमानस्थूपिकास्तम्भद्वारालङ्करणानि च  १५५

वस्त्राणि धनधान्यैश्च पशूनपि सवत्सकान्
मुदा स्थपतये दत्त्वा शेषान् भक्त्या तु तर्पयेत्  १५६

एवं मुनिवरैः प्रोक्तं प्रासादानां तु मूर्धनि
हर्म्याणां गर्भसंयुक्तौ नेत्रभित्तौ तलान्तरे  १५७

मण्डपे मध्यदेशे तु सभादीनामधोऽम्बुजात्
प्रासादवद् विधातव्यं गोपुराणां तु मूर्धनि  १५८

एवं तु विधिना सम्यक् सम्पन्नं सम्पदां पदम्
येन यत् कर्म चारब्धमादौ तदवसानके  १५९

तेनैव निष्ठितं कर्म श्रीसौभाग्यायुरेधनम्
तस्याभावे तु तत्पुत्रः शिष्यो वा तं गुरुं पटे  १६०

लिखित्वा तन्नियोगेन सर्वकर्म समाचरेत्
अज्ञानात् त्वरितेनापि यद्वस्त्वन्येन भावितम्  १६१

करोति स्वामिनं शीघ्रमन्यथेति ह निश्चयः
प्रथमं कृतवान् विधिं यथावत्
कृतवानेव करोति निष्ठितान्तम्
अथ वा विधिरन्यथा भवेच्चेऽ
दशुभं स्वामिनमन्यथा करोति  १६२

एवं ग्रीवालङ्कृतं पुष्कराभं
मानं मल्लानां शिखाभूषणं च
युक्त्या सर्वेषां करालादिबन्धं
प्रोक्तं सम्यक् चेष्टकाबन्धमूर्ध्वे  १६३

खदिरसरलसालस्तम्बकाशोकवृक्षाः
पनस तिमिसनिम्बाः सप्तपर्णाश्च सर्वे
पुरुषवकुलवह्निक्षीरिणीत्येवमाद्याः
सुदृढविमलसाराः स्थूपिकीलाः प्रसिद्धाः १६४

अथ हर्म्ये परिनिष्ठिते तदा यजमानोऽपिगुरुश्च वर्धकिः
उदगायनशोभनर्क्षपक्षे जलसम्प्रोक्षणकर्म चारभेत् १६५

नवसप्तत्रिकपञ्चरात्रिके विधिना चाङ्कुरार्पणं कुरु
भवनस्योत्तरपूर्वदेशतः स्वधिवासाहमण्डपं चरेत् १६६

नवसप्तेषुकरैर्युगाश्रकं वसुपादं नववस्त्रशोभितम्
सवितानं सुपटैर्निवेष्टितं सुमनोज्ञं सितपुष्पशोभितम् १६७

तस्य मध्ये तु शालीभिः स्थण्डिलं दण्डमानतः १६८

कृत्वाष्टाष्टपदं न्यस्य ब्रह्मादीन् वस्तुनायकान्
श्वेततण्डुलधाराभिर्विन्यस्याराध्य पुष्पकैः १६९

गन्धैर्धूपैश्च दीपैश्च बलिं दत्त्वा विधानतः
तदूर्ध्वं पञ्चपञ्चैव कलशान् वस्त्रशोभितान् १७०

मणिहेमसमायुक्तान् ससूत्रान् सापिधानकान्
निष्कलङ्कानसुषिरान् हाटकोदकपूरितान् १७१

उपपीठपदस्थांस्तान् स्वस्वनाम्नाभिधाय च
ओङ्कारादिनमोन्तेन चार्चयित्वा न्यसेत् ततः १७२

कलशस्योत्तरे पार्श्वे दर्भासनपरिस्तरे
चतुष्प्रदीपसंयुक्ते सर्वमङ्गलशोभिते १७३

पूतचेता विशुद्धात्मा स्थपतिर्व्रतमास्थितः
पीत्वा शुद्धं पयो रात्रावुपोष्याधिवसेत् ततः १७४

प्रासादस्याग्रतो यागमण्डपं विधिनाचरेत्
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् १७५

वासोभिर्दर्भमालाभिः स्रक्सुमैः समलङ्कृतम्
तन्मध्ये वेदिकां कुर्यात् तद्व्यासत्र्यंशमानतः १७६

चतुरश्रं चतुर्दिक्षु विदिक्ष्वश्वत्थपत्रवत्
सुरेन्द्रेशानयोर्मध्ये कुण्डमष्टाश्रमिष्यते १७७

त्रिमेखलासमायुक्तं वैकमेखलयान्वितम्
स्थापको मूर्तिपैः सार्धं विधिना होममाचरेत् १७८

शालिभिः स्थण्डिलं कृत्वा वेदिमध्ये विचक्षणः
मूर्तिकुम्भं न्यसेत् सम्यग् बीजमन्त्रमनुस्मरन् १७९

प्रासादस्य चतुर्दिक्षु वृत्तकुण्डविधानतः
सन्तर्प्य स्थापको जातवेदसं निवसेत् तदा १८०

विमानं जन्मतः स्थूपिकान्तं वस्त्रैर्निवेष्टयेत्
कुशास्तीर्णैर्नवैर्वस्त्रैः स्थूपिकीलमलङ्क्रियात् १८१

बल्यन्नं पायसान्नं च मुद्गान्नं च यवान्नकम्
कृसरं गुलशुद्धान्नं पीतं कृष्णं तथारुणम् १८२

गृहीत्वा सकलस्याग्रे हेमपात्रे निधाय च
दधिदुग्धघृतक्षौद्ररत्नपुष्पाक्षताम्बुभिः १८३

कदलीफलसंयुक्तं पात्रं चैवान्यशिल्पिभिः

धारयित्वाम्बुभी रात्रौ वास्तुदेवबलिं चरेत् १८४

ततः प्रभाते विमले नक्षत्रकरणान्विते
स्थपतिर्वरवेषाढ्यः प्राप्तपञ्चाङ्गभूषणः १८५

धृतहाटकयज्ञोपवीतः श्वेतानुलेपनः
श्वेतपुष्पशिरःप्राप्तेश्चोष्णीषश्चाहतवस्त्रयुक् १८६

दिशामूर्त्यपरांश्चक्षुर्मोक्षणं विधिनाचरेत्
स्नापयेत् कलशाम्भोभिरर्चयेद् गन्धपुष्पकैः १८७

प्रथमं हेमया तत्र सूच्या नयनमण्डलम्
लिखित्वा तीक्ष्णशस्त्रेण मण्डलत्रयमुल्लिखेत् १८८

आच्छाद्य नववस्त्रेण ब्राह्मणान् धान्यसञ्चयान्
धेनुं सवत्सां कन्यां च दर्शयित्वा यथाक्रमम् १८९

विमानं पुनरारुह्य स्थपतिः स्थापकाज्ञया
शङ्खकाहलतूर्यादिघोषणैः स्वस्तिवाचनैः १९०

स्थूप्यग्रादाप्रकृत्यन्तं चतुर्दिशि महाध्वजम्
लम्बयेत् क्षौमपट्टैर्वा कार्पासैर्ग्रथितं नरम् १९१

चन्दनागरुतोयेन सर्वगन्धोदकेन च
कलशोदैः कुशाम्भोभिरुपरिष्टात् समन्ततः १९२

प्रोक्षयेत् स्थपतिः प्राज्ञो भुवनाधिपतिं जपेत्
तैतलानां विमानानां पाञ्चभौतिकसंश्रितात् १९३

स्थूपिकुम्भं सुवर्णेन ताम्रेण रजतेन वा
उपलेष्टकसौधैर्वा कृत्वेष्टं कीलवत् स्मृतम् १९४

सुसंस्थाप्याचलं यावत् प्रोक्षयेद् गन्धवारिणा
विमानादवरुह्याथ गर्भगेहं च मण्डपम् १९५

प्रोक्षयित्वा मुखे स्थित्वा नत्वा देवं वदेदिदम्
धाराधिपातात् सलिलप्रकोपाद्
दंष्ट्र्या निपातात् पवनप्रकोपात्
अग्नेश्च दाहान्मुषितापचाराद्
रक्षत्विदं सद्म शिवं च मेऽस्तु १९६

निरुजा मुदिता सधना प्रथिता यशसा महदद्भुतवीर्ययुता
सततं निरुपद्रवकर्मयुता पृथिवी पृथु जीवतु धर्मविधेः १९७

ब्रह्मा विष्णुः शङ्करः सर्वदेवाः क्षोणी लक्ष्मीर्वाग्वधूः सिंहकेतुः
ज्येष्ठा विश्वेदेवदेव्यः प्रजानां श्रीसौभाग्यारोग्यभोग्यं कृषीरन् १९८

उक्त्वैवं स्थपतेः कर्मण्यत्रैव परिनिष्ठिते १९९

स्थापको विधिना शुद्धिं कुर्याद् यागादिकर्मभिः
प्रोक्षयित्वा घटाम्भोभिः पञ्चगव्यैः कुशोदकैः २००

अर्चयेद् गन्धपुष्पाद्यैर्नैवेद्यं च प्रदापयेत्
प्रासादबीजमन्त्रांस्तु न्यसेत् सौधाधिदेवताम् २०१

प्रासादाभिमुखे स्थित्वा यजमानः प्रसन्नधीः
स्थपतेर्धर्मसर्वस्वं क्लेशेन सह यद् भवेत् २०२

तत् सर्वं परिगृह्णीत सुप्रीत्या स्थापकाज्ञया
पूजयेत् तु यथाशक्ति स्थापकं स्थपतिं ततः २०३

पुत्रभ्रातृकलत्रैश्च यजमानो मुदा धनैः
धान्यैश्च पशुभिर्वस्त्रैर्वाहनैर्भूमिदानकैः २०४

शेषानपि च तक्षादिविष्टिसर्वान् स कर्मणि
सन्तर्पयेद्धिरण्यैश्च वस्त्रैर्वाऽपि मनोहरैः  २०५

विमानस्थूपिकास्तम्भमण्डपालङ्कृतान्यपि
वस्त्रादीनि ध्वजं धेनुं प्रीत्या स्थपतये ददेत्  २०६

एवमेवं कृतं वस्तु वर्धयेन्नित्यमा युगात्
यजमानस्त्विहामुत्र फलं सम्यग् लभेद् दृढम्  २०७

अन्यथा चेत् फलं नैव लभते तत्र वस्तुनि
भूतप्रेतपिशाचादिराक्षसाश्च वसन्त्यलम्  २०८

तस्मात् प्रासादनिष्पन्ने सर्वथा प्रोक्षणं चरेत्
मण्डपे च सभायां वा रङ्गे विहारशालके  २०९

हेमगर्भसभायां तु तत्तुलाभारकूटके
विश्वकोष्ठे प्रपायां च धान्यागारे महानसे  २१०

वास्तुदेवबलिं दत्त्वाधिवास्य विधिना तथा
स्थपतिः पूतचित्तात्मा प्राप्तपञ्चाङ्गभूषणः  २११

नवाम्बरधरश्चैव नववस्त्रोत्तरीयकः
सर्वमङ्गलघोषैश्च जलसम्प्रोक्षणं चरेत्  २१२

उत्तरायणमासे तु कृतं चेदुत्तमोत्तमम्
त्वरितेऽप्येवमेवं तु कुर्यात् तद् दक्षिणायने  २१३

त्रिरात्रमेकरात्रं वा सद्योऽधिवासमेव वा
तत्रैवाविकले द्रव्ये लभेत् कर्ता महत् फलम्  २१४

एकत्रिपञ्चकलशेषु तथाधिदेवा एकत्रिपञ्च कथिता इह मूर्तयस्ताः

तत्तत् स्वमन्त्रसहितं तदधः सहेमरत्नं निधाय विधिना कलशान् न्यसेत्

तत्  एवं मुदा भवनकर्मसमाप्तिमत्र कुर्याञ्जनेशजनगोकुलसम्पदृद्ध्यै
यद् परीत्यमसमाप्तिकवस्तुवेशं तद्वास्तुदेवबलिहीनमनर्थदं स्यात्  २१६

इति मयमते वस्तुशास्त्रे शिखरकरणभवनकर्मसमाप्तिविधानं नाम
अष्टादशोऽध्यायः

अथैकोनविंशोऽध्यायः

एकभौमं चतुर्मानं वक्ष्ये संक्षिप्य शास्त्रतः
त्रिचतुर्हस्तमारभ्य नव पङ्क्त्यन्तविस्तृतम्  १

तारे सप्तदशोत्सेधमध्यर्धं तत्त्रिपादकम्
द्विगुणं तु तदुत्सेधं शान्तिकं पौष्टिकं भवेत्  २

जयदं चाद्भुतं चैव चतुर्धोदयमीरितम्
चतुरं वृत्तमायामं द्व्यश्रवृत्तं षडश्रकम्  ३

अष्टाश्रमाकृतिर्ह्येषां शिखरेऽपि तथैव च
समं त्रिपादमर्धं वा मुखमण्डपमिष्यते  ४

समं तन्मण्डपं तस्य सान्तरालं सवेशकम्
युग्मस्तम्भसमायुक्तं युक्त्या सर्वाङ्गशोभितम्  ५

सार्धहस्तं द्विहस्तं वा प्रासादस्यांशमेव वा
अन्तरालस्य विस्तारं द्विदण्डं तस्य वेशनम्  ६

सावकाशान्तरालं चेद् द्वित्रिहस्तान्तरं तु वा
पार्श्वे सोपानसंयुक्तं हस्तिहस्तविभूषितम्  ७

धाम्नः कुड्यस्यार्धकं तत्समं वा पादोनं वा भित्तिविष्कम्भमानम्

पार्श्वे चैतद् द्वित्रिदराडैस्तु वेशं दुर्यादग्रे मराडपस्यास्य धीमान् ८

तत्युन्नतायतकरेषु च हस्तमानाद्धीनं त्रिपादकरमर्धमथापि पादम्
तत्रैव वस्तुनि यथोचितमाचरेद् वै हानिं च वृद्धिकमनिन्द्यमनेकशास्त्रैः
९

विमानं भवनं हर्म्यं सौधं धाम निकेतनम्
प्रासादं सदनं सद्म गेहमावासकं गृहम् १०

स्रालयं निलयं वासमास्पदं वस्तु वास्तुकम्
च्नेत्रमायतनं वेश्म मन्दिरं धिष्णयकं पदम् ११

लयं च्नयमगारं च तथोदवसितं पुनः
स्थानमित्येवमुक्ताश्च पर्यायाख्या हि पराडतैः १२

हर्म्यतारत्रिभागैकं भूतांशेषु गुणांशकम्
धातुभागे युगांशः स्याद् बाणांशं नवभागिके १३

रुद्रांशे रसभागं तु धातु त्रयोदशांशके
तिथ्यंशे वसुभागं तु सप्तदश नवांशकम् १४

विस्तारार्धं तु ते सर्वे नालीगृहविशालताः
फलिके पञ्चभागे तु युगार्धं पद्मविस्तृतम् १५

पद्मतारत्रिभागैकं कुम्भतारमिति स्मृतम्
कुम्भतारत्रिभागैकं कुम्भस्याधो वलग्नकम् १६

वलग्नस्य त्रिभागैकं कुम्भस्योपरि कन्धरम्
कन्धरत्रिगुणं पाली तत्त्रिभागेन कुड्मलम् १७

समं त्रिपादमर्धं वा महानासीविनिर्गमम्

तद्व्यासत्रिचतुर्भागहीनं स्कन्धान्ततुङ्गकम्  १८

शक्तिध्वजं तदर्धोच्चं त्रिपादं वा विधीयते
कन्धरोच्चत्रिभागकं वेदिकोदयमीरितम्  १९

सार्धदण्डं द्विदण्डं वा क्षुद्रनास्या विशालकम्
पादोत्सेधे पङ्क्तिनन्दाष्टभागे द्वारोत्सेधं तत्तदेकांशहीनम्
विस्तारं स्यात् तत्तदुच्चार्धमानं द्वारं कुर्याद्धर्म्यमध्ये नृपाणाम्  २०

योगव्यासं पादविष्कम्भमानं पादाधिक्यं वा तदर्धं त्रिपादम्
बाहुल्यं स्यादुच्छ्रये वेदभागे बाह्ये साब्जक्षेपणं तत्त्रिभागैः  २१

भित्तिव्यासे द्वादशांशे तु बाह्ये पञ्चांशान्तद्वारयोगस्य मध्यम्
तद्वच्चान्तः स्तम्भमध्यं तयोस्तन्मध्यं प्रोक्तं भित्तिमध्यं विधिज्ञैः  २२

जन्मान्तं वा जगत्यन्तं कैरवान्तं गलान्तकम्  २३

पट्टिकान्तं तलं पञ्चभेदं सर्वेषु धामसु
छिद्रं विद्यादधश्चोर्ध्वे बाह्ये नालं प्रयोजयेत्  २४

द्वादशाङ्गुलमारभ्य त्रित्र्यङ्गुलविवर्धनात्
चतुर्विंशाङ्गुलं यावदायामं पञ्चधा भवेत्  २५

अष्टाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्
तारं षोडशमात्रान्तं पञ्चधा परिकीर्तितम्  २६

समं त्रिपादमर्धं वा घनं छिद्रं तु मध्यमे
त्रिचतुष्पञ्चषण्मात्रं तारं तत्समनिम्नकम्  २७

मूलात् पञ्चत्रिभागं स्यादग्रं धारासमन्वितम्
घटितं सिंहवक्त्रेण किञ्चिन्मूलान्नताग्रकम्  २८

एवं नालं प्रकर्तव्यं वामे प्रासादमध्यमे
अन्तः पीठस्य नालस्य समं वा बहिरिष्यते २९

विस्तारायाममुत्सेधं सर्वाण्यङ्गानि च क्रमात्
संक्षेपतः समादिष्टान्यलङ्कारमथोच्यते ३०

वृत्तग्रीवामस्तकं वैजयन्तं श्रीभोगं स्यात् कर्णकूटोपयुक्तम्
मध्येभद्रं श्रीविशालं तदेव वस्वश्रं चेच्छीर्षकं स्वस्तिबन्धम् ३१

वेदाश्राभं तच्छिरः श्रीकरं स्याद् द्व्यश्रं वृत्तं हस्तिपृष्ठं हि नाम्ना
ऋत्वश्राभं शीर्षकं स्कन्दकान्तं तत्तन्नाम्ना तत्तदायामयुक्ते ३२

मध्ये भद्रयुतं कर्णकूटयुक्तं तु मस्तके
कोष्ठकं भद्रनास्यङ्गं वृत्तं वा गलमस्तकम् ३३

नाम्नैतत् केसरं प्रोक्तं युगाश्रं वा गलं शिरः
पञ्चसप्तर्तुभागे तु त्रिद्व्यंशैर्मध्यभद्रकम् ३४

नागरं द्राविडं चैव वेसरं च त्रिधां मतम्
चतुरश्रायताश्रं यन्नागरं परिकीर्तितम् ३५

अष्टाश्रं च षडश्रं च तत्तदायाममेव च
सौधं द्राविडमित्युक्तं वेसरं तु प्रकथ्यत ते ३६

वृत्तं वृत्तायतं द्व्यश्रं वृत्तं चान्यं प्रकथ्यते
स्थूप्यन्तं चतुरश्रं यन्नागरं परिकीर्तितम् ३७

ग्रीवात् प्रभृति वस्वश्रं विमानं द्राविडं भवेत्
ग्रीवात् प्रभृति वृत्तं यद् वेसरं तदुदाहृतम् ३८

तले तले विमानानां दिक्षु देवान् न्यसेत् क्रमात्

पूर्वायां द्वारपालौ तु नन्दिकालौ च विन्यसेत्  ३९

दक्षिणे दक्षिणामूर्तिं पश्चिमेऽच्युतमेव हि
अथवा लिङ्गसम्भूतमुत्तरे तु पितामहम्  ४०

मण्डपे मध्यदेशे तु दक्षिणे तु विनायकम्
तत्पूर्वे पश्चिमे वाऽपि नृत्तरूपं विशेषतः  ४१

कात्यायनीमुदग्भागे क्षेत्रपालं तथैव च
स्थानकासनसंयुक्ता दिशामूर्तीर्न्यसेद् बुधः  ४२

विशेषेण कथोपेतं रूपाण्यपि विधानतः
एवं मूलतले प्रोक्तमुपर्युपरि वक्ष्यते  ४३

पुरन्दरं न्यसेत् पूर्वे सुब्रह्मण्यमथापि वा
दक्षिणे वीरभद्रः स्यान्नारसिंहश्च पश्चिमे  ४४

उत्तरे तु विधाता स्याद् धनदो वा विधीयते
एवं द्वितलविन्यासं त्रितले तु मरुद्गणान्  ४५

तले तलेऽमरान् सिद्धान् गन्धर्वादिमुनीन् न्यसेत्
षोडश प्रतिमाश्चैव सर्वत्र परिकीर्तिताः  ४६

ग्रीवाधस्तात् प्रतेरूर्ध्वे कोणे कोणे वृषान् न्यसेत्
सर्वेषामपि देवानां तत्तद्वाहनमीरितम्  ४७

प्रदक्षिणावृतं तस्य सर्वदेवालये तथा
इत्येवमादिभिर्युक्तं विमानं सम्पदां पदम्  ४८

कूटैर्नीडैस्तोरणैर्मध्यभद्रैर्युक्तायुक्तं तत्तु सर्वाङ्गशोभम्
नानाधिष्ठानाङ्घ्रिवेद्यादियोगं धाम प्रोक्तं तैतिलानां मयेह  ४९

इति मयमते वस्तुशास्त्रे एकभूमिविधानं नाम एकोनविंशोऽध्यायः

## अथ विंशोऽध्यायः

द्वितलं पञ्चधा मानं वक्ष्ये संक्षेपतः क्रमात्
पञ्चषङ्ढस्तमारभ्य द्विद्विहस्तविवर्धनात् १

सैकार्कमनुहस्तान्तमुत्सेधं पूर्ववद् भवेत्
तारे सप्तर्तुभागे तु भागं सौष्ठिकविस्तृतम् २

कोष्ठं तु द्विगुणायामं शेषं हारं सपञ्जरम्
विमानोत्सेधं विभजेदष्टाविंशतिसङ्ख्यया ३

ईशदृगृतुबन्धांशैर्भूतनेत्रशिवांशकैः
नेत्रसार्धचतुर्भागैरध्यर्धेन यथाक्रमम् ४

मसूरकङ्घ्रिकं मञ्चाङ्घ्रिमञ्चवितर्दिकम्
कन्धरं शिखरं कुम्भं मूलतः परिकल्पयेत् ५

चतुरश्रमधिष्ठानं तद्वत् कन्धरमस्तकम्
चतुष्कूटसमायुक्तं चतुष्कोष्ठसमन्वितम् ६

दभ्रनीडानुपर्यष्टौ षडष्टैवाल्पनासिकम्
शिखरं चोरुनीडाभिर्वेदसङ्ख्याभिरन्वितम् ७

हारान्तरस्य मध्ये तु कड्यं क्कुम्भलतान्वितम्
तोरणैर्वेदिकाद्यैस्तु नानाचित्रैर्विचित्रितम् ८

सर्वदेवार्हकं शस्तं नाम्नैतत् स्वस्तिकं भवेत्
तदेव सौष्ठिकं निम्नगुन्नतं कोष्ठकं यदि ९

अन्तरप्रस्तरोपेतमेतद् विपुलसुन्दरम्
अंशमंशत्रयं सत्रिपादांशं साङ्घ्रिभागिकम् १०

भागत्रयं वितर्द्यङ्घ्रिप्रस्तरग्रीवमस्तकम्
पादोदये दशांशे तु द्वितलादिविमानके  ११

अन्तरप्रस्तरोपेतं कूटशालोन्नतं मतम्
तदेव कोष्ठकं निम्नं सौष्ठिकं चोन्नतं यदि  १२

अन्तरप्रस्तरोपेतमेतत् कैलासमुच्यते
तदेव वर्तुलं वेदिकन्धरं शिखरं घटम्  १३

अष्टकूटं चतुश्शालोपेतं सप्ताष्टनासिकम्
कोष्ठकान्निर्गमं मध्ये द्वित्रिदण्डेन सौष्ठिकात्  १४

समग्रीवाशिरोयुक्तं कूटकोष्ठकमीरितम्
नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम्  १५

नाम्नैतत् पर्वतं प्रोक्तं विमानं सार्वदेशिकम्
तदेव शिखरे चार्धकोष्ठकं तु चतुष्टयम्  १६

चतुरश्रशिरोयुक्तं चतुष्कूटसमन्वितम्
नानाधिष्ठानसंयुक्तं षडष्टैवाल्पनासिकम्  १७

नाम्नैतत् स्वस्तिबन्धं स्यान्नानावयवशोभितम्
तदेव सौष्ठिकं कोष्ठमन्तरप्रस्तरैर्युतम्  १८

हाराल्पपञ्जरं निम्नं नवाष्टैर्वाल्पनासिकम्
नानालङ्कारसंयुक्तं कल्याणमिति पठ्यते  १९

तदेव शिखरे चार्धकोष्ठकं रहितं तु चेत्
चतुर्नीडासमायुक्तमेतत् पाञ्चालमिष्यते  २०

तदेवाष्टाश्रकं वेदीकन्धरं शिखरं घटम्

शिखरेऽष्टमहानासि नाम्नैतद् विष्णुकान्तकम्  २१

तदेव कूटशालानामन्तरप्रस्तरं विना
तच्चतुर्भागमाधिक्यमायतं चतुरश्रकम्  २२

आयताश्रं तथा वेदीकन्धरं शिखरं भएत्
स्थूपित्रयसमायुक्तमेतन्नाम्ना सुमङ्गलम्  २३

तदेवायतवृत्तं चेद् वेदिकाकन्धरं शिरः
सर्वावयवसंयुक्तमेतद् गान्धारमिष्यते  २४

तारादर्धांशमाधिक्यमायतं चतुरश्रकम्
द्व्यश्रवृत्तशिरोयुक्तं नेत्रशालामुखान्वितम्  २५

हस्तिपृष्ठामिदं द्व्यश्रं वृत्तं वापि मसूरकम्
चतुरश्रमधिष्ठानं वृत्तं स्याद् गर्भगेहकम्  २६

सर्वालङ्कारसंयुक्तमेतन्नाम्ना मनोहरम्
तदेव जन्माद्या कुम्भाद् वृत्तं चेति बहिर्बहिः  २७

शेषं पूर्ववदुद्दिष्टमिष्टमीश्वरकान्तकम्
तदेव चतुरश्रं स्याद् गर्भगेहं मसूरकम्  २८

वर्तुलं जन्मतः स्थूपिकान्तं चेद् वृत्तहर्म्यकम्
आयताश्रमधिष्ठानं षडश्रं कन्धरं शिरः  २९

तदेव पूर्ववत् सर्वं नाम्ना कुबेरकान्तकम्
मानं पञ्चविधं धाम्नां भेदं पञ्चदशैव हि  ३०

द्वितलानां यथा प्रोक्तं तथा कुर्याद् विचक्षणः
सञ्चितासञ्चितं चैवोपसञ्चितमिति त्रिधा  ३१

स्त्रीपुंनपुंसकं चैव त्रिविधं तत् प्रवक्ष्यते
इष्टकाभिः शिलाभिर्वा सञ्चितं यद् घनीकृतम्  ३२

कपोतादिशिरोयुक्तं तत्तत् पुंस्त्वं समीरितम्
ऐष्टकं दारुजं सौधं भोगयुक्तागसंयुतम्  ३३

स्त्रीत्वं ह्यसञ्चितं भोगाभोगयुक्तं द्रुमेष्टकैः
घनाघनाङ्गयुक् षण्डमुपसञ्चितमिष्यते  ३४

ऊर्ध्वतलपादनिजदैर्घ्यमुनिभागे स्थूप्युदयमेकमथ कं प्रति गुणांशम्
द्व्यंशि गलमंशकवितर्दिकमधस्तात्खण्डभवनस्य विधिरुक्तमुरुधीभिः
३५

पादोदये दशनवाष्टविभाजिते तत्सप्तर्तुपञ्चरणायतमत्र भागम्
शेषं झषांशमुदयार्धविशालकं वा षट्पञ्चवेदचरणेन भवेद् विशालम्
३६

नीडस्य तावदुदयं च विशालमङ्घ्रेर्मूलात्त्रिपादविपुलं तलिपं तयोश्च
हारान्तरे सदनमध्यपदे च कूटे कोष्ठे च तोरणमलङ्कृतमेव कुर्यात्  ३७

द्वारस्योभयपार्श्वे द्वारसमीपे तु वाथ पदमध्ये
द्वारपवासगुहा स्यादुत्तरमण्डान्तकं तु वोच्चं तत्  ३८

खण्डान्तपोतिकान्तं तोरणमात्रोदयं तु वा कथितम्
युक्त्या प्रवेशयुक्त्या सर्वस्मिन् धाम्नि कर्तव्याः  ३९

इति मयमते वस्तुशास्त्रे द्विभूमिविधानं नाम विंशोऽध्यायः

## अथ एकविंशोऽध्यायः

त्रितलं पञ्चधामानं संक्षेपाद् वक्ष्यतेऽधुना
सप्ताष्टहस्तमारभ्य द्विद्विहस्तविवर्धनात्  १

पञ्चदशविकारान्तं व्यासं तुङ्गं तु पूर्ववत्
सप्ताष्टनन्दहस्ते तु सप्ताष्टांशैर्विभाजिते २

भागेन कूटविस्तारं कोष्ठद्वित्रिगुणायतम्
लम्बपञ्जरमर्धांशं हाराभागं तु तत्समम् ३

ऊर्ध्वभूमौ षडंशेंऽशं कूटं तद्द्विगुणायतम्
कोष्ठकं चान्तरे हारं भागेनैव प्रकल्पयेत् ४

ऊर्ध्वभूमौ त्रिभागेन मध्ये भद्रं विधीयते
दण्डं सार्धं द्विदण्डं वा भद्रं तत् कारयेद् बुधः ५

विमानोच्चे विशेषेण चतुर्विंशतिभाजिते
पाशगङ्गाश्विनीभिस्तु सत्रिपादगुणांशकैः ६

सार्धांशैः सार्धबन्धांशैः सपादांशार्धकांशकैः
सार्धत्रिभिस्तु भागेन योजयेत् तु विचक्षणः ७

धरातलमधः स्तम्भ मञ्चमङ्घ्रिकमञ्चकम्
तलिपं प्रस्तरं वेदीकन्धरं शिखरं घटम् ८

कूटं नीडं कोष्ठकं चाष्टकं तद् वेदाराभं जन्मतः स्थूपिकान्तम्
ऊर्ध्वे भूमावल्पनीडं द्विरष्टाविष्टं ह्यस्मिन् षण्णवत्यल्पनासम् ९

नानाधिष्ठानाङ्घ्रिवेद्यादियोगं मूर्धन्यष्टार्धं तथादभ्रनासम्
कोष्ठं कूटादुन्नतं चेत् समं च शम्भोर्वासं स्वस्तिकं तत्त्रिभौमम् २०

तारे सप्तनवांशे तु भागं सौष्ठिकविस्तृतम्
शालाभागं तथा द्व्यंशं हाराभागेन कल्पयेत् ११

अष्टकूटं तु तत्कोष्ठं द्वादशैव विधीयते
अष्टौ नीडानि विंशत्तु शतमत्राल्पनासिकम् १२

अष्टाश्रं मस्तकं वेदी कन्धरं चाष्टनासिकम्
विमलाकृतिकं नाम्ना शम्भोर्वासं सनातनम्  १३

हस्तनवसप्ततति सप्तनवभागं भागततिकूटवसुकं तु रविकोष्ठम्
ऊर्ध्ववसुपञ्जरमथाष्टगलनासं विंशतिशतानु विमलाकृति विमानम्
१४

एकादशकरं व्यासमष्टभागैर्विभाजयेत्
तच्चतुर्भागमाधिक्यमायतं वृत्तमिष्यते  १५

द्व्यश्रवृत्तमधिष्ठानं तद्वत् कन्धरमस्तकम्
तद्विस्तारार्धमानेन वर्तुलं वर्तनीयकम्  १६

अश्रात् पार्श्वे च पृष्ठं च कुर्यादर्कद्वयांशकम्
कूटकोष्ठकनीडानां विस्तारं भागमिष्यते  १७

कोष्ठकं द्विगुणायामं हारा भागेन योजिता
समं त्रिपादमर्धं वा मुखमण्डपमिष्यते  १८

मण्डपोर्ध्वं यथा हर्म्यं तथालङ्कारमीरितम्
कूटकोष्ठादिसंयुक्तं मण्डपं सर्वहर्म्यके  १९

त्रिवर्गसहितं वाऽपि तोरणाद्यैर्विचित्रितम्
मण्डपं समसूत्रं चेदन्तरालं तु निम्नकम्  २०

कूटकोष्ठादि सर्वाङ्गं मानसूत्राद् बहिर्गतम्
स्वव्यासार्धं तदर्धार्धं दण्डं सार्धद्विदण्डकम्  २१

द्विदण्डार्धं त्रिदण्डं वा मानसूत्राद् बहिर्गतम्
एवं युञ्जीत हर्म्यं तु सम्पदामास्पदं सदा  २२

ऋजुसूत्रं प्रमाणान्तं तद्भङ्गं विपदां पदम्
षड्भागं स्यात् तदूर्ध्वे तु पृष्ठतस्तस्य पार्श्वयोः २३

कृत्वार्कद्विगुणांशं तु कूटकोष्ठादि पूर्ववत्
ऊर्ध्वभौमं चतुर्भागं यथायुक्तिवशान्नयेत् २४

मस्तके पुरतो नेत्रशालावक्त्रसमन्वितम्
गर्भकूटोपसम्पन्नं क्षुद्रनास्यङ्घ्रिसंयुतम् २५

कूटकोष्ठादिसंयुक्तं यथालङ्कारमाचरेत्
शिखरे दश नास्यः स्युस्तिस्त्रः पादसमन्विताः २६

अष्टकूटं तथा कोष्ठं नीडं द्वादश चैव हि
हारायां क्षुद्रनीडं स्यादर्कद्विगुणसंख्यया २७

नानामसूरकस्तम्भवेदिकाद्यैरलङ्कृतम्
सोपपीठमधिष्ठानं केवलं वा मसूरकम् २८

हस्तिपृष्ठमिदं नाम्ना सर्वदेवेषु योग्यकम्
पादोच्चत्रिद्विभागोच्चं पादं सर्वाङ्गसंयुतम् २९

पोतिकारहितं वीरकाण्डोपरि समण्डितम्
उत्तरं वाजनं साब्जक्षेपणं निम्नवाजनम् ३०

तदूर्ध्वे झषकाण्डं स्यान्नानापत्रैर्विचित्रितम्
तोरणाकृतिसंयुक्तं मृणाल्यन्वितकन्धरम् ३१

सर्वालङ्कारसंयुक्तं स्तम्भतोरणमीरितम्
पादान्तरे वा हारायां कर्णप्रासादमध्यमे ३२

शालामध्येऽन्तराले तु कुर्यात् सर्वेषु धामसु

स्तम्भे स्वाङ्घ्रियुक्ते समतलमुभयोः पार्श्वयोर्वीरकाण्ड-
स्याग्रे न्यस्तोत्तरं वाजनमुपरि दलं क्षेपणं तोरणाग्रम्
नक्रैः पत्रादिभिर्यद् विरचितमथ तद् धाम्नि वा मण्डपे वा
शालायामन्यवस्तुष्वभिमतमयुतस्तम्भयुक् तोरणं स्यात् ३३

तदेव चतुरश्राभमायतं तन्मसूरकम् ३४

विस्तारमष्टभागं स्यादायामं दशभागभाक्
कूटकोष्ठकनीडं च भागेन परिकल्पयेत् ३५

हाराबागं तु भागेन षडंशं चोर्ध्वभूमिके
तदूर्ध्वे तु चतुर्भागमायामे द्व्यंशमाधिकम् ३६

सायतं द्व्यश्रवृत्तं स्याद् वेदिकागलमस्तकम्
कूटकोष्ठादि सर्वाङ्गं पूर्ववत् परिकल्पयेत् ३७

नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम्
पादोपरि भवेन्नासी स्वस्तिबन्धनशोभिता ३८

यथा बलं यथा योगं तथा कुर्याद् विचक्षणः
एतदप्युदितं सौधं गजपृष्ठं पुरातनैः ३९

युग्मेऽप्येवं प्रयुञ्जीयात् सर्वहर्म्यं विचक्षणः
त्रयोदशकरव्यासं नवधा विभजेत् समम् ४०

गर्भगेहं त्रिभागेन गृहपिण्डस्तु भागतः
अन्धारमंशमंशेन परितोऽन्धारिका भवेत् ४१

अंशेन सौष्ठिकं कोष्ठं विस्तारं त्रिगुणायतम्
अर्धेन नीडविस्तारं शेषं हाराङ्गमिष्यते ४२

कोष्ठमध्ये त्रिदण्डेन नासी निर्गमनान्विता
उपर्यपि षडंशेंऽशं कूटं तद्द्विगुणायतम् ४३

कोष्ठकं भागतो हारा पञ्जरैरन्विता भवेत्
ऊर्ध्वभागं त्रिभागेन मध्ये दण्डेन निर्गमम् ४४

चतुरश्रमधिष्ठानं वस्वश्रं गलमस्तकम्
आदौ तले चतुष्कर्णे कूटं वेदाश्रमस्तकम् ४५

अष्टाश्रमूर्ध्वभूमौ तु सौष्ठिकानां तु मस्तकम्
अष्टकूटं तथा नीडं कोष्ठकं तु तथैव हि ४६

क्षुद्रनीडं तथाप्यष्टावष्टौ स्युर्गलनासिकाः
स्वस्तिकाकारसंयुक्तं नासिकाभूषणं भवेत् ४७

भद्रकोष्ठमिदं नाम्ना यथार्थं परिकीर्तितम्
तदेव वर्तुलं कर्णकूटमूर्ध्वोर्ध्वभूमिके ४८

मस्तकं तस्य वृत्तं स्याच्चतुर्नासीसमन्वितम्
वृत्तकूटमिदं नाम्ना देवानां सार्वदेशिकम् ४९

तदेवाष्टांशमाधिक्यमायतं चतुरश्रकम्
कर्णकूटं युगाश्रं स्यादायतं वृत्तमस्तकम् ५०

कोष्ठभद्रं विना तत्र शेषं पूर्ववदाचरेत्
स्थूपित्रयसमायुक्तमेतन्नाम्ना सुमङ्गलम् ५१

पञ्चादशकरव्यासं पङ्क्त्यंशेन विभाजयेत्
गर्भगेहं चतुर्भागमन्धार्यंशेन योजिता ५२

अलिन्द्रमंशमंशेन खण्डहर्म्यं बहिः क्रमात्
कर्णे मध्येऽन्तरे कार्यं कूटं कोष्ठं च पञ्जरम् ५३

भागेन कोष्ठकायामं द्विगुणं सम्मतं बुधैः
ऊर्ध्वभूमौ रसांशे तु भागं सौष्ठिकविस्तृतम्  ५४

कोष्ठकं द्विगुणायामं हारा भागेन योजयेत्
तदूर्ध्वे तु चतुर्भागं द्विभागं मध्यनिर्गमम्  ५५

दण्डं वाऽध्यर्धदण्डं वा द्विदण्डं वा विशेषतः
चतुरश्रमधिष्ठानं तद्वत् कन्धरमस्तकम्  ५६

अष्टकूटं तथा नीडं कोष्ठकं तु तथैव च
लम्बनीडमुपर्यष्टौ वर्षस्थलसमन्वितम्  ५७

नासिका स्वस्तिकाकारा स्वत्र परिशोभिता
नानामसूरकस्तम्भवेदीजालकतोरणम्  ५८

उन्नतौ कूटकोष्ठौ चेदन्तरप्रस्तरान्वितौ
एतद् गान्धारमित्युक्तमष्टाश्रं वागलं शिरः  ५९

तदेव वर्तुलं वेदी कन्धरं शिखरं भवेत्
शेषं पूर्ववदुद्दिष्टं नाम्ना श्रीभोगमिष्यते  ६०

वृत्ते वृत्तायते द्व्यश्रवृत्तेऽष्टाश्रे षडश्रके
कूटकोष्ठकनीडानामुपर्युपरि च क्रमात्  ६१

कूटकोष्ठकनीडैश्च मण्डितं खण्डहर्म्यके
ऋजुभागविशालात् तु द्व्यश्रवृत्ते तु वर्तुले  ६२

भागं किञ्चिद् भवेन्न्यूनं भागं सर्वं समं तु वा
अष्टांशोन दशांशोनमूर्ध्वांशं वाऽप्यधोंशकात्  ६३

यथा शोभाबलावाप्तिस्तथा युञ्जीत बुद्धिमान्

अर्पितानर्पितं चैव प्रासादं द्विविधं भवेत्  ६४

अर्पितं न च सालिन्द्रमनर्पितमलिन्द्रभाक्
एवमल्पक्रमं सर्वं योजयेत् तद् विचक्षणः  ६५

गुणशरमुनिनन्दैकादशैकाधिकाकैस्तिथिमुनिदश भागे हर्म्यतारे कृते-ऽस्मिन्
शशिगुणयुग बाणैः षडयमी नागनन्दैः स्वभवनविपुलस्यार्धेन नालीगृहं स्यात्  ६६

हर्म्याङ्गानां कूटकोष्ठादिकानां ग्रीवाधस्ताद् वेदिका योजनीया
हाराभागे वेदिकावेदिका वा नीडं वा तत्राल्पनासं च कुर्यात्  ६७

तोरणं त्रिविधं पत्रतोरणं मकरान्वितम्
चित्रतोरणमित्येषां मण्डनं त्वधुनोच्यते  ६८

बालचन्द्रनिभं पत्रैश्चित्रितं पत्रतोरणम्
द्वयोर्मकरयोर्वक्त्रस्थितमध्यमपूरितम्  ६९

नानाविधलतायुक्तमेतन्मकरतोरणम्
तदेव पार्श्वयोर्मध्यं पूरिमध्यं द्वयोस्ततः  ७०

नक्रतुण्डं प्रगृह्यैव द्वयोरास्यविनिर्गतैः
विद्याधरैश्च भूतैश्च सिंहैर्व्यालैश्च हंसकैः  ७१

बालैः स्रग्दामकैरन्यैर्मणिबन्धैर्विचित्रितम्
चित्रतोरणमेतत् स्याद् देवानां भूभुजां वरम्  ७२

गुहासु प्रतिमास्तासु पार्श्वपादयुतानि च
तोरणान्युत्तराधस्तात् प्रयोज्यानि विचक्षणैः  ७३

स्तम्भोच्चे पञ्चषट्सप्तद्व्यंशोच्चं तोरणाग्रकम्
शेषं पादोदयं पादं चतुरश्राष्टवृत्तयुक् ७४

कुम्भमण्ड्यादिसंयुक्तं पोतिकारहितं तु वा
उत्तरं वाजनं साब्जक्षेपणं क्षुद्रवाजनम् ७५

पोतिकोपरि वा कुर्याद् वीरकाण्डस्य चोपरि
उत्सन्ध्यन्तानताग्रं तु कुर्यान्मकरविष्टरम् ७६

तुङ्गार्धं त्रिचतुष्ज्पञ्चदण्डतोरणविस्तृतम्
द्वारतुल्योन्नतं व्यासान्तरं स्तम्भद्वयोरपि ७७

उत्तरोत्तरयुक्ताष्टमङ्गलोर्ध्वस्थनक्रवत्
फलकं पञ्चवक्त्रं तु तदूर्ध्वे शूलसंयुतम् ७८

छत्रकेतुपताकाश्रीर्भेरी कुम्भं च दीपिका
नन्द्यावर्तेन चाष्टौ हि सर्वेषामष्टमङ्गलम् ७९

एवं प्रोक्तं चतुर्भेदं देवादीनां तु तोरणम्
पद्मासनोर्ध्वे कुम्भस्य तिर्यक् चारुलताकृतिः ८०

तदूर्ध्वे फलकोर्ध्वाब्जमिष्टकुम्भलताग्रकम् ८१

पद्मकुम्भलतैवं स्यादन्यदप्येवमूह्यताम्
तदेवोत्सन्धिकोर्ध्वे तु वीरकाण्डसमन्वितम् ८२

स्तम्भकुम्भलतैवं स्याद् स्तम्भतोरणवच्छिरः
हारायां तु प्रकर्तव्या दैवेऽदैवे निकेतने ८३

षडष्टदश मार्ताण्डमनुवैकारमात्रकैः
व्यासं तारार्धनिष्क्रान्तं त्रिद्व्यंशं वा त्रिभागिकम् ८४

वृत्ताकारसमं छन्नं तोरणाङ्घ्रिवदायतम्
सकन्धरं तदूर्ध्वे तु शुकनास्या विभूषितम् ८५

वृत्तस्फुटितमित्युक्तं द्युसदां सद्मभूषणम्
तले तले तु सोपानं प्रयुञ्जीत विचक्षणः ८६

त्रिविधं तस्य मूलं तु चतुरं वृत्तमायतम्
चतुर्विधप्रकारं स्यात् त्रिखण्डं शङ्खमण्डलम् ८७

वल्लीमण्डलमत्यर्धगोमूत्रेण समाहितम्
मूलादग्रं क्रमक्षीणं प्रथितं शङ्खमण्डलम् ८८

स्याद् वल्लीमण्डलं वृक्षारोहिवल्लीसमक्रियम्
अश्वपादोपरि स्थित्यारोहणं दक्षिणाङ्घ्रिणा ८९

द्विदण्डाद्या सप्तदण्डात् सोपानस्य विशालता
अश्वपादस्य विस्तारो द्विगुणाद्यश्चतुर्गुणात् ९०

शयितव्यासपादार्धत्रिपादांशं दृशोदयैः
स्थितानीभबालवृद्धसमखण्डान्यनुक्रमात् ९१

शयानफलकव्यासः षोडशाष्टादशाङ्गुलाः
समुद्गतं षडंकमेवं सोपानकल्पनम् ९२

हस्तव्यासं द्विदण्डं तत्पादव्यासं तु बाहलम्
हस्ते यथाबलं योज्यं प्रवशे स्थितशायिनोः ९३

अयुग्ममेव सोपानं गुह्यागुह्यवशात् ततः
एकभक्तिविनिष्क्रान्तं मण्डपादिषु बाह्यतः ९४

सोपानं सर्ववर्णानां प्रादक्षिण्याधिरोहणम्

प्रशस्तं विपरीतं तद् विनाशाय भवेदिह  ९५

अधिष्ठानाधिरोहार्थं सोपानं पार्श्वयोर्मुखम्
हस्तिहस्तं चाश्वपादफलकान्तं प्रयोजयेत्  ९६

सोपानं तदधिष्ठानस्तम्भप्रस्तरवद् भवेत्
एवं विधिविशिष्टं तु सोपानं सम्पदां पदम्  ९७

एवं प्रोक्तं तैतिलानां नराणां वासे योग्यं तोरणं चैव युक्त्या
सोपानं तद्भेदमाकारमस्मिन् सम्यग् योज्यं वास्तुविद्याविधिज्ञैः  ९८

स्यान्नागरं द्राविडवेसरं च क्रमेण वै सत्त्वरजस्तमांसि
महीसुरोर्वीपतिवैश्यकास्ते हरिर्विधाता हर आधिदैवाः  ९९

इति मयमते वस्तुशास्त्रे त्रिभूमिविधानो नाम एकविंशोऽध्यायः

## अथ द्वाविंशोऽध्यायः

पञ्चमानं चतुर्भौमं वक्ष्ये संक्षेपतः क्रमात्
त्रिचतुष्पङ्क्तिहस्तादिद्विद्विहस्तविवर्धनात्  १

एकद्वाविंशदन्तं तु व्यासं तुङ्गं तु पूर्ववत्
विस्तारोत्सेधमानाभ्यां भागान् वक्ष्यामि हर्म्यके  २

त्रयोदशकरव्यासमष्टधा विभजेत् समम्
एकांशं कूटविस्तारं शालायामं द्विभागिकम्  ३

भागेन पञ्जरव्यासमूर्ध्वे तु पुनरष्टधा
प्राग्वदेव सभाशालापञ्जराणामुपर्यपि  ४

ऊर्ध्वे षड्भागिके भागमेकं कूटस्य विस्तृतम्
द्विभागं कोष्ठकायामं नीडं भागार्धमिष्यते  ५

तदूर्ध्वे गुणभागेंऽशं मध्ये दण्डेन निर्गमम्
उत्सेधं विभजेद् विद्वान् नवत्रिंशतिसंख्यया ६

सार्धद्व्यंशमधिष्ठानं पञ्चांशं पाददैर्घ्यकम्
तदर्धं प्रस्तरोत्सेधं सत्रिपादयुगांशकम् ७

ऊर्ध्वभूम्यङ्घ्रिकोत्सेधं सपादद्व्यंशमञ्चकम्
जङ्घा तद्द्विगुणा चोर्ध्वे द्व्यंशेन प्रस्तरोदयम् ८

पादाधिकचतुर्भागमुपरिस्तम्भतुङ्गकम्
स्यात् सत्रिभागपादेन प्रस्तरं वेदिकांशकम् ९

गलोच्चमश्विनीभागं सार्धवेदैस्तु मूर्धनि
शेषभागं शिखामानमाहोमं चतुरश्रकम् १०

रविसंख्या भवेत् सौष्ठी कोष्ठं तावत् तु पञ्जरम्
शिखरे वेदनास्यः स्युश्चाल्पनास्या विभूषितम् ११

स्वस्तिकाकारसंयुक्तं नासिकाभिरलङ्कृतम्
प्राग्वदेव तलं चाधः स्तम्भालङ्कारतोरणम् १२

सर्वालङ्कारसंयुक्तमेतद्धर्म्यं सुभद्रकम्
सर्वं प्राग्वत् कूटकोष्ठादि युक्त्या मध्ये मध्ये मस्तकं मण्डलाभम् १३

वृत्ताकारं स्यात् सभानां शिरस्तद्विस्तारार्धेनान्वितं गर्भगेहम्
शेषं त्र्यंशेनावृतावासपिण्डस्तत्तुल्यं तद्बाह्यतोऽन्धारहारम् १४

नानाधिष्ठानाङ्घ्रिवेद्यादियोगं नाम्नेदं स्याच्छ्रीविशालं सुहृष्टम्
पञ्चदशकरव्यासं नवधा विभजेत् क्रमात् १५

गर्भगेहं त्रिभागैकं गृहपिण्डयस्तदंशकम्

अंशेन परितोऽलिन्द्रं खण्डहर्म्यं तथांशकम्  १६

सभा शाला तथा नीडं भागेनैकेन विस्तरात्
विस्तार त्रिगुणायामा स्वव्याससमनिर्गमा  १७

शालामध्ये महानासी भागतत्या विनिर्गता
सभाकोष्ठकनीडानामन्तरेऽर्धेन हारकम्  १८

तदुपर्यष्टभागेन विभजेत् कूटमंशकम्
कोष्ठकस्य तु विस्तारं तदेव द्विगुणायतम्  १९

कूटशालान्तरे नीडमंशेन परिकल्पयेत्
तदूर्ध्वे रसभागे तु कूटमंशेन कोष्ठकम्  २०

विस्तारद्विगुणायाममन्तरेऽर्धेन पञ्जरम्
ऊर्ध्वभूमे चतुर्भागे मध्ये दण्डेन निर्गमम्  २१

अष्टाश्रं कर्णकूटं स्यात् कोष्ठकं क्रकरीकृतम्
महाशिखरमष्टाश्रमष्टनास्या विभूषितम्  २२

कूटकोष्ठकनीडानां संख्यायां पूर्ववत् ततिः
अस्याप्युत्सेधभागं च पूर्ववत् परिकल्पयेत्  २३

भद्रकोष्ठमिदं नाम्ना वेदभौमं दिवौकसाम्
सप्तदशकरव्यासं दशभागैर्विभाजयेत्  २४

नालीगृहं चतुर्भागमंशेनान्धारिका भवेत्
अलिन्द्रमंशमंशेन परितः खण्डहर्म्यकम्  २५

कूटं कोष्ठं च् नीडं च भागेन परिकल्पयेत्
कोष्ठायामं द्विभागं स्याच्छेषं हारा सपञ्जरम्  २६

जलस्थलं विहायोर्ध्वे वसुभागैर्विभाजिते
भागेन कूटविस्तारं कोष्ठकं द्विगुणायतम्  २७

हारान्तरे तथांशेन लम्बपञ्जरमीरितम्
तदूर्ध्वे रसभागे तु भागं सौष्ठिकविस्तृतम्  २८

द्विभागं कोष्ठकायामं हारायां क्षुद्रपञ्जरम्
तदूर्ध्वे तु त्रिभागेन मध्ये दण्डेन निर्गमम्  २९

चतुरश्रमधिष्ठानमष्टाश्रं गलमस्तकम्
त्रिचतुष्कोष्ठकं तावत् सौष्ठिकं चाष्टपञ्जरम्  ३०

लम्बपञ्जरमष्टौ हि क्षुद्रनीडं द्विरष्टकम्
गलनास्यष्टसंयुक्तं कोष्ठकं किञ्चिदुन्नतम्  ३१

नानामसूरकस्तम्भवेदीजालकतोरणम्
नानालङ्कारसंयुक्तं नानाचित्रैर्विचित्रितम्  ३२

सोपपीठमधिष्ठानं केवलं वा मसूरकम्
स्वस्तिकाकारसंयुक्तं नासिकाभिरलङ्कृतम्  ३३

पूर्ववत् तुङ्गभागं स्यादेतन्नाम्ना जयावहम्
नवपङ्क्तिकरव्यासे दशभागविभाजिते  ३४

गर्भगेहं चतुर्भागं गृहपिण्डस्तदंशके
अन्धारमंशमंशेन परितः खण्डहर्म्यकम्  ३५

कूटकोष्ठकनीडानां तारमंशेन योजयेत्
कोष्ठकं द्विगुणायामं हारा भागसमन्विता  ३६

पञ्चांशे सौष्ठिकव्यासे मध्ये द्व्यंशेन विस्तरम्

एकभागविनिष्क्रान्त युग्मस्तम्भसमन्वितम् ३७

सोपपीठमधिष्ठानं समङ्घ्रं सवितर्दिकम्
सकन्धरशिरोयुक्तं सर्वालङ्कारसंयुतम् ३८

पादुकोत्तरयोर्मध्ये नवांशेनोपपीठकम्
मसूरकं द्विभागोच्चं द्विगुणं स्तम्भदैर्घ्यकम् ३९

सार्धांशं प्रस्तरोत्सेधमर्धांशं वेदिकोदयम्
उत्तरादिकपोतान्तं गलोदयमितीरितम् ४०

पञ्जराकृतिसंयुक्तं कपोतात् तु विनिर्गतम्
यथाशोभं यथायुक्ति तथा शक्तिध्वजान्वितम् ४१

कपोतपञ्जरं ह्येतत् प्रासादे सार्वदेशिके
हारायां वाऽथ शालायां मध्ये मध्ये तु योजयेत् ४२

कूटकोष्ठकनीडं चैवान्तरप्रस्तरान्वितम्
जलस्थलं विहायोर्ध्वभूमावष्टांशसौष्ठिकम् ४३

द्विगुणं कोष्ठकायामं तयोर्मध्ये तु पञ्जरम्
तदूर्ध्वे रसभागे तु सौष्ठिकोष्ठं तु पूर्ववत् ४४

विजयस्य यथा प्रोक्तं शेषमूर्ध्वे तु योजयेत्
कूटकोष्ठादि सर्वाङ्गं पूर्ववत् संख्यया विदुः ४५

महानीडं द्विरष्टौ स्यान्नाम्नेदं भद्रकूटकम्
तदेवान्यदलङ्कारं शालामध्ये सभद्रकम् ४६

वृत्तग्रीवाशिरोयुक्तमेतन्नाम्ना मनोहरम्
तदेवान्यदलङ्कारं वेदाश्रं कन्धरं शिरः ४७

नानामसूरकस्तम्भवेदिकाद्यैरलङ्कृतम्
नाम्नावन्तिकमित्युक्तं शम्भोर्मन्दिरमुत्तमम् ४८

त्रिःसप्तहस्तविपुले चतुरंशनाली धर्मांशकेंऽशमभितो गृहपिण्डमानम्
अन्धारमंशमभितोंऽशकमङ्गहारं कूटं च नीडमथ कोष्ठकमंशतारम् ४९

शालायतं द्विगुणमंशकतारहारं वातायनैर्मकरतोरणकैर्विचित्रम्
त्यक्त्वा जलस्थलमुपर्यपि चाष्टभागे कूटं च नीडमथ कोष्ठकमंशतत्या

शालायतं द्विगुणमूर्ध्वतले षडंशे सौष्ठ्यंशमंशविपुलं द्विगुणायतं स्यात्
कोष्ठं च नीडविपुलं हि तदर्धभागं चोर्ध्वं युगांशिनयनांशकमध्यभद्रम्

दण्डेन निर्गममुपर्यपि भद्रनीडं सार्धं द्विदण्डविपुलं गलनासिकं च
वृत्ताभकन्धरवितर्दिकमस्तकं स्यादष्टार्धनासिकमदभ्रमथाल्पमष्टौ ५२

कूटं च नीडमथ कोष्थकमुन्नतं स्यादादौ तले तदपि मध्यममञ्चयुक्तम्
शालोन्नतं ह्युपरि चोन्नतमूर्ध्वकूटं वृत्ताभमत्र वसुपट्टशिरस्तु मध्ये ५३

वेदाश्रकूटशिखरं ह्यथ मूलभूमौ नासाल्पकं ह्युपरि वेधविहीनबन्धम्
नानामसूरकसहाङ्घ्रिकशोभिताङ्गं नाम्ना सुखावहमिदं सुरमन्दिरं स्यात्

सत्रिपादयुगलार्धपञ्चकैर्द्व्यर्धसाङ्घ्रिशरसार्धनेत्रकैः
पञ्चभागिकस भागनेत्रकैस्त्र्यङ्घ्रिवेदनयनार्धवेदकैः ५५

त्र्यङ्घ्रिकांशकशिवद्विपादगङ्गाश्विनीभिरुदये षडष्टके
कुट्टिमं चरणमञ्चपादकं प्रस्तरं तलिपमञ्चमङ्घ्रिकम् ५६

प्रस्तरं तलिपमञ्चवेदिकं कन्धरं शिखरकुम्भकं क्रमात्
पञ्चभौममुदितं शिवालके नन्दपङ्क्तिभिरथेन्द्रियांशकैः ५७

उच्छ्रये तदधः षड्भिर्गुणांशैरङ्घ्रिकं तलम्

षड्भौममेवमुद्दिष्टं ताराभागं तथा भवेत्  ५८

तदधः सार्धषड्भागैः सपादगुणभागकैः
स्तम्भं मसूरकं कुर्यात् तारे रुद्रार्कभागतः  ५९

सप्तभौममिदं प्रोक्तं विमानं सार्वदेशिकम्
तदधो मुनिभिः सार्धगुणांशैः स्तम्भकुट्टिमम्  ६०

धर्मरुद्रार्कभागैस्तु सत्रयोदशभागिकैः
अष्टभौमं वदन्त्यस्मिन्नेवं प्राज्ञा मुनीश्वराः  ६१

तदधः सार्धसप्तांशैः सत्रिपादगुणांशकैः
स्तम्भं च तलकं कुर्यात् तारेंऽशं तत्र पूर्ववत्  ६२

एवं नवतलं प्रोक्तं दशभौममथोच्यते
तदधोऽष्टयुगांशैस्तु पादं मसूरकं भवेत्  ६३

तारे पूर्वोक्तभागैस्तु मनुभागैरथापि वा
तदधः सार्धवस्वंशैः सपादयुगभागिकैः  ६४

स्तम्भं मसूरकं कुर्यात् तारे तद्वच्च पङ्क्तिकैः
तथा द्विरष्टभागैस् तु सप्तदशांशकैस्तु वा  ६५

एकादशतलं प्रोक्तं द्वादश क्षममुच्यते
तदधो नन्दनन्दार्धभागैः स्तम्भं मसूरकम्  ६६

तारे द्विरष्टभागादि यावदर्कद्वयांशकम्
गृहपिण्डयलिन्द्रहारा गर्भागाराद् बहिः क्रमात्  ६७

हर्म्यस्यावधिकं यावन्नीयते तावदंशकैः
द्वित्रिवेदेषु षड्भागैः प्रागुक्तांशैस्तु वा गृहम्  ६८

एकार्धेनाथवालिन्द्रं शेषं कुडच्येषु योजयेत्
केचित् त्रिर्नवभिर्भागैर्वदन्ति द्वादशावनौ ६९

षट्कुडचं पञ्चसालिन्द्रं बहिः कूटादिशोभितम्
कूटं कोष्ठं च नीडं च क्षुद्रशालेभतुराडकम् ७०

यथाशोभमलङ्कारं तथा युञ्जीत बुद्धिमान्
युग्महस्तैरयुग्मैर्वा योजयेदेवमिच्छया ७१

युग्मांशे द्व्यंशकं वाऽपि कूटव्यासं द्विरायतम्
शालायाश्चतुरंशैर्वा युग्मे युग्मांशकैर्विदुः ७२

नानाभागैरलङ्कारैरन्यैरुक्तं मुनीश्वरैः
तथा वा तत्र युञ्जीयात् प्राज्ञः शिल्पिषु बुद्धिमान् ७३

तलमेकं भवेद् ग्रासं खराडहर्म्ये चतुःस्थले
द्वितलं पञ्चषट्सप्तभूमावेव विधीयते ७४

त्रितलं चाष्टभूमे तु नन्दपङ्क्तितले तथा
पञ्चभौमं चतुर्भौमं द्वादशैकादशे तले ७५

मूलतः कूटकोष्ठादीन् यः कर्तुं सम्यगीहते
तले तले विभागांश्च यथायुक्त्या प्रयोजयेत् ७६

कूटकोष्ठादिसर्वाङ्गमुपर्युपरि पूर्ववत्
कूटकोष्ठकनीडाद्यैर्भेदैराख्या यथोदिता ७७

पूर्वं तैर्भेदकैर्युक्तस्याख्या धाम्नस्तथा भवेत्
आद्वादशतलादेवं युञ्जीयाद् द्वितलादितः ७८

कर्णे मध्ये तयोर्मध्ये कूटं कोष्ठं च पञ्जरम्

कर्तव्यं मानसूत्रात् तु तेषां निर्गममुच्यते ७९

स्वव्यासार्धं तथार्धार्धं दण्डं वा द्वित्रिदण्डकम्
अन्तर्विन्यासदेशं तु मानसूत्रं न योजयेत् ८०

ऋजुसूत्रप्रमाणान्तं तद्भङ्गे विपदां पदम्
तस्मात् कूटादिसर्वाङ्गं मानसूत्राद् बहिर्नयेत् ८१

चतुरश्रं तु वस्वश्रं षोडशाश्रं तु वर्तुलम्
मस्तकं स्तूपिकोपेतं कूटं कर्णयुतं मतम् ८२

मध्यनासिसमोपेतमर्धकोटिसमन्वितम्
मुखपट्टिकयोपेतं शक्तिध्वजसमायुतम् ८३

अनेकस्थूपिकोपेतं कोष्ठकं मध्यमे भवेत्
हस्तिपृष्ठनिभं पृष्ठे शालाकारं मुखं मुखे ८४

पञ्जरं विहितं कूटकोष्ठयोरन्तरे बुधैः
पार्श्ववक्त्रं तदेवेष्टं हस्ति तुण्डं समण्डितम् ८५

एष जातिक्रमः प्रोक्तः कर्णकोष्ठसमन्वितम्
मध्ये कूटं तयोर्मध्ये क्षुद्रकोष्ठादिशोभितम् ८६

छन्दमेतत् समुद्दिष्टं कूटं वा कोष्ठकं तु वा
अन्तरप्रस्तरोपेतनिम्नं वोन्नतमेव वा ८७

विकल्पमिति निर्दिष्टमाभासं तद्विमिश्रितम्
क्षुद्राल्पमध्यमोत्कृष्टं हर्म्याणामेवमीरितम् ८८

जात्यादिभेदकैर्युक्तं विमानं सम्पदां पदम्
विपरीते विनाशाय भवेदेवेति निश्चयः ८९

षडष्टाश्रे च वृत्ते च द्व्यश्रवृत्ते च तत् क्रमात्
पञ्चाष्टनवपङ्क्त्यंशे व्यासैकांशेन बाह्यतः ९०

वर्तयेत् तु तदाकृत्या कोटिच्छेदार्थमीरितम्
चतुरश्रस्य नाहेन योजयेत् तु समं यथा ९१

तया वर्तनया तेषां मानं संपूर्णमिष्यते
मानं धाम्नस्तु संपूर्णं जगत्संपूर्णता भवेत् ९२

तस्मात् सर्वप्रयत्नेन कुर्यात् संलक्ष्य बुद्धिमान्
एवं संक्षेपतः प्रोक्तं प्रासादानां तु लक्षणम् ९३

एकादिद्वादशान्तं ह्युदयविपुलभागं करैस्तारमानं
चोत्सेधं कूटकोष्ठाद्यवयवकरणं नाहभेदं क्रमेण
प्रोक्तं संक्षिप्य सम्यङ् मुनिभिरवितथैर्ब्रह्मपूर्वैर्यथोक्तं
नानाभेदैर्विमानं प्रियतरमनघं तैतलानां मयेन ९४

इति मयमते वस्तुशास्त्रे चतुर्भूम्यादिबहुभूमिविधानो नाम
द्वाविंशोऽध्यायः

## अथ त्रयोविंशोऽध्यायः

प्राकारपरिवारविधानम्
रक्षार्थं च विमानानां शोभार्थं च तथाऽधुना
परिवारनिवेशार्थं प्राकारं प्रोच्यते बुधैः १

कृत्वा चतुष्पदं मूलप्रासादस्य तु विस्तृतम्
आद्यं सालं महापीठं पदैः षोडशभिर्युतम् २

मण्डूकाख्यं द्वितीयं स्यान्मध्यं भद्रमहासनम्
चतुर्थं सुप्रतीकान्तं पञ्चमं चेन्द्रकान्तकम् ३

एवं युग्मपदैर्युक्तमयुग्मैरथ वक्ष्यते

एकमाद्यं विमानं स्यादाद्यं सालं तु पीठकम्  ४

द्वितीयं स्थरिडलं सालं मध्यं चोभयचरिडतम्
सुसंहितं चतुर्थं स्यादीशकान्तं तु पञ्चमम्  ५

चतुरश्रीकृते तेन मुखायाममिहोर्ध्वतः
पादाधिकमथाध्यर्धं पादोनद्विगुणं क्रमात्  ६

द्विगुणं द्विगुणार्धं च त्रिगुणं च चतुर्गुणम्
मुखायाममिति प्रोक्तं प्राकाराणां विशेषतः  ७

क्षुद्राणामल्पहर्म्याणां स्वव्यासार्धप्रमाणतः
अन्तर्मराडलकं कुर्यात् सत्रिहस्तं तु तत्समम्  ८

द्वितीयं हि तृतीयं तु तस्मात् पञ्चकराधिकम्
तस्मात् ससप्तहस्तं तु तत्समं स्याच्चतुर्थकम्  ९

नवहस्तसमायुक्तं तत्समं पञ्चमं भवेत्
मध्यमानां स्वतारार्धमन्तर्मराडलमिष्यते  १०

तत्समं पञ्चहस्तेन संयुक्तं स्याद् द्वितीयकम्
सप्तहस्ताधिकं तस्मात् सालमुक्तं तृतीयकम्  ११

नवहस्ताधिकं तस्माच्चतुर्थं सालमीरितम्
एकादशकरैर्युक्तं तत्समं पञ्चमं भवेत्  १२

उत्तमानां स्वतारार्धमाद्यं सालं प्रकीर्तितम्
तत्समं सप्तहस्तेन संयुक्तं स्याद् द्वितीयकम्  १३

नवहस्ताधिकं तस्माद् तृतीयं सालमुच्यते
तस्मादेकादशाधिक्यं तत्समं तु चतुर्थकम्  १४

त्रयोदशकरैर्युक्तं तत्समं पञ्चमं भवेत्
एवं क्षुद्राल्पमध्यानामुत्कृष्टानां प्रकीर्तितम् १५

एतेन कारयेद् धीमान् पूर्वोक्तेन क्रमेण वा
प्राकारं परितस्तस्मान्मुखायामं तु पूर्ववत् १६

भित्त्यभ्यन्तरमानेन मानयेन्मानवित्तमः
भित्तिमध्येन बाह्येन कैश्चिदुक्तं तु सूरिभिः १७

अन्तर्मण्डलभित्तेश्च विष्कम्भं सार्धहस्तकम्
तस्माद् त्रित्यङ्गुलाधिक्याद् द्विहस्तान्तं यथाक्रमम् १८

पञ्चानामपि सालानां विष्कम्भं परिगृह्यताम्
तत्तद्विष्कम्भमानेन त्रिगुणं वा चतुर्गुणम् १९

प्राकारोदयमुद्दिष्टं स्वाष्टांशोनाग्रविस्तरम्
उत्तरान्तोचिता वाऽपि कुम्भमण्डयन्तकोदयाः २०

मसूरकादिवर्गाढ्याः खण्डहर्म्याभिमण्डिताः
ऋजुभित्तियुता वाऽपि बुद्बुदार्धेन्दुशीर्षकाः २१

क्षुद्राल्पानां तु सालानां भित्तिर्हस्तप्रमाणतः
सार्धहस्तावधिर्यावत् पूर्ववद् वर्धयेत् क्रमात् २२

सोत्तरा वाजनच्छत्र शीर्षाभा सालभित्तयः
भित्तिव्याससमोत्तुङ्गं पादार्धाधिकमेव वा २३

तदुच्चे रुद्रभागेऽप्यग्निमोक्षोऽक्षिशिवांशकैः
उत्तरं वाजनाब्जं च क्षेपणं च यथाक्रमम् २४

ऋजुभित्तियुतं ह्येतत् खण्डहर्म्याभिमण्डितम्

अधिष्ठानादिवर्गाढ्यं निर्गमोद्गमसंयुतम्  २५

एकद्वित्रितलोपेतं कुर्यादावृतमण्डपम्
अभ्यन्तरे बहिष्ठात् तु ऋजुभित्तियुता भवेत्  २६

अधोभूमित्रिभागे तु द्विभागं चोर्ध्वभूमिकम्
तत्पादाष्टांशहीनं वा बहिर्भित्त्युन्नतं भवेत्  २७

मालिकाकृतिरेवं वा महावारयुतं तु वा
मानान्तं बाह्यभित्त्युच्चमधो भूमेः स्थलान्तकम्  २८

मूलसद्मोत्तरान्तं वा प्रस्तरान्तमथापि वा
खण्डहर्म्योत्तरान्तं वा शिखरान्तोन्नतं तु वा  २९

मण्डपं द्वितलं वैकतलं वाऽपि तदावृतम्
अधिष्ठानादिवर्गाढ्यं समं वाष्टांशहीनकम्  ३०

त्रिपादं वा विशेषेण सालाधिष्ठानतुङ्गता
द्विगुणं चरणोत्तुङ्गं षडष्टांशोनमेव वा  ३१

उच्चं वा भूतरूपं वा कर्तव्यं सालशीर्षके
मूलजन्मतलं हस्तमात्रोच्चं जन्मसालतः  ३२

प्रतिसालं तु षण्मात्रहीनं स्याच्छेषसालके
क्षुद्रे साष्टादशाङ्गुल्यं मध्यमे मूलपादुकम्  ३३

क्षपयेत् तु चतुर्मात्रैर्यावत् पञ्चान्तसालकम्
योजयेद् विधिनानेन स्थपतिस्तत्क्रमेण तु  ३४

परिवारविमानानां मानं गर्भार्धमिष्यते
मूलवस्तुत्रिभागैकं मध्यं वा पादबाह्यकम्  ३५

त्रिचतुष्पञ्चषट्सप्तहस्तैर्वा हर्म्यविस्तृतम्
अष्टौ वा परिवाराः स्युस्तथा द्वादश षोडश  ३६

द्वात्रिंशत् परिवाराश्च हीष्यन्ते शास्त्रकोविदैः
परिवारामरोत्सेधं युक्त्या तत्रैव योजयेत्  ३७

यदुक्तं सकले बेरे तन्मानं गृह्यतां वरैः
सर्वलक्षणसंयुक्तं स्थानकासनमेव वा  ३८

हीनविमानानामथ परिवाराश्चाष्ट  प्रोक्ताः
प्राकारोऽप्येकः स्यात् पीठपदे चार्यकादिषु वा  ३९

ऋषभगणाधिपकमलजा मातृ गुहार्याच्युताश्च चण्डेशः
उपपीठपदे चान्तर्द्वादश परिवारकाः स्थाप्याः  ४०

वृषकमलजगुहहरयः पूर्ववदुदितास्तथार्यकादिपदे
रविगजवदनयमास्ते मातृजलेशौ च दुर्गा च  ४१

धनदश्चण्डः क्रमशः सूर्यपदादिष्ववामगताः
षोडश परिवाराः स्युश्चोग्रे पीठे निधातव्याः  ४२

अन्तश्चार्यक भागादिषु वृषभाद्यास्तथा प्राग्वत्
ईशपदे च जयन्ते भृशभागेऽग्नौ च वितथे च  ४३

भृङ्गनृपे पितृसुगले शोषे वायौ च मुख्यकेऽप्युदितौ
चण्डश्चन्द्रः सूर्यो गजवदनः श्रीः सरस्वती चेति  ४४

ता मातरश्च शुक्रो जीवो दुर्गा दितिस्तथाप्युदितिः
द्वात्रिंशत् परिवाराः स्थण्डिलकाख्ये तु चण्डिते स्थाप्याः  ४५

ब्रह्मपदं नवबाह्यो श्रीज्येष्ठोमा सरस्वती चैताः

साविन्द्रेन्द्रजयांशे रुद्रजये चापवत्से च ४६

आर्यादिषु च पदेषु वृषभाद्याः पूर्ववत् कथिताः
ईशे पर्जन्यपदे माहेन्द्रे भानुभागे तु ४७

सत्यान्तरिक्षकानलपूष गृहक्षतार्किभागे तु
गन्धर्वे मृषभागे पितृबोधनपुष्पदन्तवरुणेषु ४८

असुरे यक्षसमीरणभागे नागे च भल्लाटे
सोमपदे मृगभागेऽप्युदितौ देवाः क्रमात् स्थाप्याः ४९

ईशशशिनन्दिकेश्वरसुरपतयो महाकालः
दिनकरवह्निबृहस्पतिगजवदनयमाश्च भिङ्गिरिटिः ५०

चामुण्डाप्यथ निर्ऋतिश्चागस्त्यो विश्वकर्मा च
जलपतिरथ भृगुनामा दक्षः प्रजापतिर्वायुः ५१

दुर्गा च वीरभद्रो धनदश्चण्डेश्वरः शुक्रः
स्थण्डिलचण्डितभागे पण्डितजनमण्डलैरुदिताः ५२

युग्मायुग्मपदे ते कुड्यगता वागताश्च पदमध्ये
त्रिप्राकारे पञ्चप्राकारेऽप्येवमेव भवेत् ५३

अष्टाद्याः परिवारा मध्यान्तर्हारयोरुदिताः
प्रत्यग्दिङ्मुखवर्म्ये मित्रे वृषभस्थितिः प्रोक्ता ५४

कमलजगुहहरयस्ते भूधरभागार्ययोर्विवस्वति च
यन्मुखमीश्वरभवनं तन्मुखमेवोदितं तेषाम् ५५

शिष्टा हर्म्याभिमुखाः पूर्वोक्तपदे निधातव्याः
प्राक्प्रत्यङ्मुखमुक्ता देवाभिमुखो न वाऽभिमुखः ५६

अवागुत्तरदिशि मुखिनौ चण्डेशेभाननौ च मतौ
प्रासादमण्डपसभाशालाकाराणि कार्याणि ५७

परिवारविमानानि सर्वाण्यङ्गानि युक्तिवशात्
मध्यान्तर्हारयोरेव मालिकापङ्क्तिरिष्यते ५८

एकद्वित्रिचतुर्भूमियुक्ता वा पञ्चभूमिका
भित्तेरुपरि भित्तिः स्यात् पादः पादोपरि स्मृतः ५९

भित्तेरुपरि पादो वा पादोपरि न भित्तिका
कूटकोष्ठादियुक्ता वा जालभित्तिरलङ्कृता ६०

मण्डपाकृतियुक्ता वा शालाकारसभान्विता
भक्तिमानं तथा पादायामं संक्षिप्य वच्यते ६१

मूलधाम्नस्तूत्तरान्तमुपानाद्युन्नतं क्रमात्
सप्तभागैः समं कृत्वा द्व्यंशं मसूरकोन्नतम् ६२

पादायामं तु पञ्चांशं पादं सर्वाङ्गसंयुतम्
अथवा पादमानं तु नवभागैर्विभाजयेत् ६३

अधिष्ठानं द्विभागं स्याच्छेषं पादोदयं भवेत्
सार्धद्विहस्तमारभ्य षट्षडङ्गुलवर्धनात् ६४

षड्ढस्तान्तं समुत्सेधं स्तम्भं त्रिःपञ्चसंख्यया
भित्त्यभ्यन्तरतस्तावदेवं तस्या विशालता ६५

भक्त्यायामं च तावत् स्यात् क्षुद्रे महति मन्दिरे
षडङ्गुलात् समारभ्य वाङ्गुलाङ्गुलवर्धनात् ६६

विंशन्मात्रावधिर्यावत् पादविष्कम्भमिष्यते

पादोच्चार्धमधिष्ठानं षडष्टांशोनमेव वा ६७

पादोदयत्रिभागैकं चौर्भागैकमेव वा
पादबन्धमधिष्ठानं चारुबन्धमथापि वा ६८

पादोनमप्यलङ्कारं प्रस्तरस्याप्यलङ्कृतम्
पूर्वोक्तेन प्रकारेण युक्त्या तत्रैव योजयेत् ६९

खलूरिका मनुष्याणां वासेष्वेवमुदीरिताः
प्रथमावरणाद् यावत् त्रिप्राकारान्तमावृतिः ७०

यथेष्टदिशि हि द्वारं युक्त्या युक्तं नृणां मतम्
परिवारविमानानि तत्तदुक्तपदे क्रमात् ७१

आर्यात् पूर्वोक्तनीत्या तु प्रासादाभिमुखान्यपि
नृत्तमण्डपपीठादि परिवाराद् बहिः पुरः ७२

स्नानार्थं मण्डपं वाऽपि नृत्तमण्डपमेव वा
परिवारालयान्तर्वा कर्तव्यं स्वप्रमाणतः ७३

गर्भगृहार्धेन समौ पीठव्यासोच्छ्रयौ मतौ
एकद्वित्रिकरव्यासोत्सेधं वा बलिविष्टरम् ७४

गोपुरात् तु बहिः पीठं प्रासादार्धेन निर्गमम्
तत्समं वा त्रिपादं वा निर्गमं बलिविष्टरम् ७५

पञ्चानामपि सालानामारात् पैशाचमग्रतः
पैशाचपीठप्रासादमध्ये तु बलिविष्टरम् ७६

पीठोत्सेधे षोडशभागे भागेन जन्मं स्यात्
जगती चतुरंशेन कुर्यात् कुमुदं त्रिभिर्भागैः ७७

भागेनोपरि पट्टं कराठं कुर्यात् त्रिभागेन
एकेनोपरि कम्पं द्व्यंशं स्याद् वाजनं चोर्ध्वे ७८

तदुपरि वाजनमेकं तद्व्यासार्धं त्रिपादमुपरिदलम्
पद्मत्रिभागमूर्ध्वे कर्तव्या कर्णिका मध्ये ७९

तस्यार्धं कमलोच्चं वार्धोच्चं कर्णिकायास्तु
मध्ये भद्रयुतं वाभद्रं वा सोपपीठं वा ८०

नानाधिष्ठानानामाकृतयो वा यथा तथाप्युक्ताः
एवं पीठालङ्कृतमुदितं प्रवरैः पुरातनैर्मुनिभिः ८१

वृषभस्याग्रतः कुर्यात् प्रासादार्धप्रमाणतः
ध्वजस्थानं तदग्रे तु तन्नीत्वा त्रिशिखालयम् ८२

एते वृषादयः सर्वे चान्तर्वामे तु गोपुरात्
मर्यादिसालमाश्रित्य पावके हव्यकोष्ठकम् ८३

अग्निगोपुरयोर्मध्ये धनधान्यगृहं भवेत्
याम्ये मज्जनशाला स्यात्तत्रस्थं पुष्पमराडपम् ८४

नैर्ऋतिस्थानमाश्रित्य कुर्यादायुधमराडपम्
वरुणे वायुदेशे तु शयनस्थानमिष्यते ८५

सौम्यायां तु प्रकर्तव्यं धर्मश्रवणमराडपम्
ईशे वापी च कूपं स्यादापवत्सपदाश्रितम् ८६

ईशगोपुरयोर्मध्ये वाद्यस्थानं प्रकीर्तितम्
आरादीशे विमानस्य स्थानं चराडेश्वरस्य वा ८७

पूर्वोक्तस्थानदेशे वा कर्तव्यं भवनं बुधैः

शक्तिस्तम्भं पीठात् पुरतो विद्याद् विमानमानेन ८८

क्षुद्राणां द्विगुणोदयमल्पानां तत्समं विद्यात्
मध्यविमानानामपि तुङ्गार्धं वा त्रिपादोच्चम् ८९

उदयत्रिभागमुदितं वाऽर्धं वोत्कृष्टहर्म्याणाम्
हस्तं षोडशमात्रं द्वादशदशमात्रकं विपुलम् ९०

मण्डीकुम्भयुतं तत् फलकोऽर्ध्वे भूतमुद्वा वा
शैलं दारुमयं वा वृत्तं वाष्टाश्रकं द्विरष्टाश्रम् ९१

वेशस्थानं वापी कूपारामौ च दीर्घिका चैव
सर्वत्र सम्मतं स्यान्मठभुक्तिनिकेतनं चापि ९२

नान्तर्मण्डलमथ वा चान्तहारं तथैकसालं चेत्
अन्तर्हारा मध्यमहारा मर्यादाभित्तिश्च ९३

त्रिप्राकारेऽप्युदिताः पञ्चयुताः पञ्चसालाः स्युः
एषां प्राकाराणामुपरि वृषाः स्युः सपङ्क्तिकाः परितः ९४

शक्तिस्तम्भात् पुरतस्त्रिचतुःपञ्चान्तरालयं नीत्वा
गणिकागृहमथ पार्श्वद्वये तु संवाहिकासहितम् ९५

प्राकारबहिः परितो वासं परिवारकाणां तु
दासीनामपि तद्वत् पुरतो वा वासमुद्दिष्टम् ९६

यमदिशि गुरुमठमुदितं पूर्वस्मिन् वाऽप्यवाग्वदनम्
शेषमनुक्तं सर्वं कुर्याद् राजोपचारेण ९७

विष्णुधिष्ण्येऽहमद्यापि वक्ष्यामि परिवारकम्
प्रमुखे वैनतेयश्च वह्नौ गजमुखालयम् ९८

यमे पितामहः सप्त मातरः पितरीरिताः
गुह्ये जलेशे वायव्ये दुर्गा सोमे धनाधिपः ९९

सेनापितरथैशाने पीठादीनां तु पूर्ववत्
प्राकारोऽप्येक एवं स्यादुच्यन्ते द्वादशाधुना १००

विष्णोरभिमुखं चक्रं गरुडस्तत्प्रदक्षिणे
शङ्खो वामे बहिर्वक्त्राश्चैते सकलरूपिणः १०१

सूर्याचन्द्रमसौ पार्श्वे गोपुरस्यान्तराननौ
वह्नौ पचनगेहं स्याच्छेषं पूर्ववदाचरेत् १०२

मध्यान्तर्हारयोरेव परिवारास्तु षोडश
मण्डपस्याग्रतः कुर्यात् पक्षिराजं तु पीठकम् १०३

लोकेशाः क्रमशः स्थाप्यास्तत्तदंशे शिवं विना
आदित्यश्च भृगुश्चैवमश्विनौ च सरस्वती १०४

पद्मा च पृथिवी चैव मुनयः सचिवस्तथा
द्वारपालकमध्यादिष्वन्तराले तु कीर्तिताः १०५

द्वात्रिंशत्परिवारांश्च युक्त्या तत्रैव योजयेत् १०५-२

चण्डप्रचण्डरथ नेमिसपाञ्चजन्यदुर्गागणेशरविचन्द्रमहानुभावाः
सर्वेश्वरः सुरपतिश्च तथा दशैते प्राकारपञ्चमुखगोपुरकल्पनीयाः १०६

वृषस्य लक्षणं सम्यक् संक्षिप्येह प्रवक्ष्यते १०७

द्वारलिङ्गसमं श्रेष्ठं चतुरंशविहीनकम्
मध्यमं त्रिद्विभागोच्चं कन्यसं वृषभोदयम् १०८

गर्भार्धं कन्यसं नालीगेहतुल्यं वरोदयम्

तदन्तरेऽष्टभागे तु नवमानमुदीरितम्  १०९

एकादिनवहस्तान्तं कनिष्ठादित्रयं त्रयम्
पञ्चाशदंशकं तुङ्गमेकांशमात्रमीरितम्  ११०

पञ्चाष्टाङ्गुलमायामं तन्मानमधुनोच्यते
मूर्ध्नस्तु गलपर्यन्तं दशमात्रं ततस्त्वधः  १११

ग्रीवोच्चमष्टमात्रं स्यादुरोन्तं षोडशाङ्गुलम्
ऊरुदैर्घ्यं च षण्मात्रं जानुमानं द्विमात्रकम्  ११२

जङ्घादीर्घं षडङ्गुल्या खुरं कोलकमुच्यते
शृङ्गान्तरं द्विमात्रं स्याच्छृङ्गदैर्घ्यं द्विकोलकम्  ११३

मूलव्यासं त्रिभागेन शृङ्गाग्रं तु द्विमात्रकम्
ललाटं नवमात्रं स्यान्मुखव्यासं शराङ्गुलम्  ११४

उत्सेधं तत्समं नेत्रायामं द्व्यङ्गुलमीरितम्
सार्धाङ्गुलं तदुत्सेधं नेत्रमध्यान्मुखायतम्  ११५

वसुमात्रं ततः पृष्ठं ग्रीवान्तं तु षडङ्गुलम्
नेत्रमध्याल्ललाटोच्चं चतुर्मात्रं प्रकीर्तितम्  ११६

नेत्रात् कर्णान्तरं तावत् कर्णायामं शराङ्गुलम्
कर्णमूलं द्विमात्रं स्याद् भागं कर्णस्य मध्यमम्  ११७

अग्रमङ्गुलविस्तारं घनमर्धाङ्गुलं भवेत्
घ्राणं सार्धाङ्गुलायाममङ्गुलं गाढविस्तृतम्  ११८

अङ्गुलं नासिकातुङ्गमास्यं पञ्चाङ्गुलायतम्
उत्तरोष्ठं त्रिमात्रोच्चमधरोष्ठं द्विमात्रकम्  ११९

जिह्वायामविशालोच्चं त्रिद्व्येकाङ्गुलमीरितम्
ग्रीवाव्यासं दशाङ्गुल्या मूलं द्वादशमात्रकम् १२०

मूलेऽग्रे च घनं पृष्ठे ग्रीवस्याष्टषडङ्गुलम्
ककुत् षडङ्गुलव्यासमुत्सेधं तु तदर्धकम् १२१

ग्रीवस्याग्रविशालं तु द्विमात्रं युक्ततो न्यसेत्
ककुदस्तु शरीरोच्चं त्रिःषडङ्गुलमीरितम् १२२

द्विःसप्तमात्रकं पृष्ठे व्यासं द्वादशमात्रकम्
अपरोरुविशालं तु दशाष्टचतुरङ्गुलम् १२३

पञ्चाङ्गुलं तदायामं जानुदेशं द्विमात्रकम्
जङ्घादैर्घ्यं शराङ्गुल्या त्र्यङ्गुलं स्याद् विशालकम् १२४

सुरोत्सेधं त्रिमात्रं स्यात् पुच्छमूलं तथैव च
सार्धाङ्गुलं तु पुच्छाग्रं जङ्घान्तं तस्य लम्बनम् १२५

मुष्कायामविशालं तु त्रिद्विमात्रं यथाक्रमम्
शेफायामं त्रिमात्रं स्यादुदरादङ्गुलं घनम् १२६

ऊरुमूलविशालं तु चतुरङ्गुलमग्रतः
जङ्घाग्रे तु द्विमात्रं स्याच्छेषं युक्तिवशान्नयेत् १२७

स्थितं वा शयितं वाऽपि यथा योग्यं तथाचरेत्
सुधालोहैः परैर्द्रव्यैर्यथा योग्यं तथा चरेत् १२८

घनं वाऽप्यघनं वाऽपि लोहजं युक्तितो नयेत्
सकलस्य तु यन्मानं तन्मानं वृषभोदयम् १२९

किञ्चिन्न्यूनाधिकं कार्यं सर्वदोषसमुद्भवम्

तस्मात् परिहरेद् विद्वान् सर्वलक्षणसंयुतम्  १३०

द्वारलिङ्गसमं वृषभं वरं मध्यमं चतुरंशविहीनकम्
द्वित्रिभागसमोदयमीरितं कन्यसं त्रिविधं मुनिभिर्वरैः  १३१

इति मयमते वस्तुशास्त्रे प्राकारपरिवारविधानो नाम त्रयोविंशोऽध्यायः

अथ चतुर्विंशोऽध्यायः

अधुना गोपुराणां तु लक्षणं वक्ष्यते क्रमात्
क्षुद्राल्पमध्यमुख्यानां हर्म्याणां स्वप्रमाणतः  १

मूलप्रासादविस्तारे सप्ताष्टनवभागिके
दशैकादशभागे तु तत्तदेकांशहीनकम्  २

द्वारशोभादिविस्तारं गोपुरान्तं यथाक्रमम्
क्षुद्राल्पयोः समुद्दिष्टं मध्यानां प्रविधीयते  ३

मूलधाम्नस्तु विस्तारे चतुष्पञ्चषडंशके
सप्ताष्टांशे च भागोनं गोपुरान्तं यथाक्रमम्  ४

द्वारशोभादिविस्तारं पञ्चधा परिकीर्तितम्
त्रिभागैकांशमध्यं च द्विभागं स्यात् त्रिभागिके  ५

चतुर्भागे त्रिभागं तु पञ्चांशे चतुरंशकम्
द्वारशोभादिविस्तारं गोपुरान्तं क्रमेण तु  ६

उत्तमानामिदं प्रोक्तं हस्तैरप्यथ वक्ष्यते
द्विहस्तादि द्विरष्टान्तमेकारत्निविवर्धनात्  ७

एकैकं त्रिविधा मानं द्वारशोभादिपञ्चसु
त्रिहस्तादेकत्रिंशान्तं द्विद्विहस्तविवर्धनात्  ८

प्रोक्तं त्रिः पञ्चधा मानं द्वारशोभादिपञ्चके
नवहस्तं समारभ्य द्विद्विहस्तविवर्धनात् ९

सप्तत्रिंशत्करं यावत् पञ्चपङ्क्तिप्रमाणकम्
शोभादिगोपुराणां च विस्तारं परिकीर्तितम् १०

द्वारशोभा द्वारशाला द्वारप्रासादहर्म्यके
गोपुरेण तु पञ्चैते द्वारशोभादिपञ्चसु ११

अथवा हस्तमानेन विस्तारं परिगृह्यताम्
त्रिपञ्चसप्तनन्दैकादशारत्नैर्विवर्धनात् १२

पञ्चमानं द्विरत्निभ्यां पञ्चस्वेकस्य संमतम्
पञ्चसप्तत्रिरूयेकादशत्रयोदशमानतः १३

प्रथमावरणे द्वारशोभाव्यासस्तु पञ्चधा
त्रिपञ्चाद्यात्रयोविंशद् द्वारशालाविशालता १४

पञ्चपञ्चकराद् यावत् त्रयत्रिंशत्करान्तकम्
द्वारप्रासादविस्तारं पञ्चधा परिकीर्तितम् १५

पञ्चत्रिंशत्कराद् यावत् त्रिचत्वारिंशदन्तकम्
द्वारहर्म्यस्य विस्तारं पञ्चभेदमथोच्यते १६

नवपञ्चकराद् यावत् त्रिपञ्चाशत्करान्तकम्
पञ्चधा विपुलं प्रोक्तं गोपुरस्य मुनीश्वरैः १७

चक्रवर्तिमहाराजवेश्मन्यप्येवमूह्यताम्
सार्धं त्रिपादं द्विगुणं त्र्यंशैकद्व्यंशमायतम् १८

शोभादीनां तु पञ्चानां द्वाराणामुदितं ततः

तेषामेवं क्रमाद् व्यासादुत्सेधं पृथगुच्यते १९

सप्तांशे चदशांशं च चतुरंशे षडंशकम्
सप्तभागं चतुर्भागे त्रित्रिभागं तु पञ्चके २०

द्विगुणं तु यथासंख्यं द्वारायतनतुङ्गता
गोपुरस्य तु विस्तारत्रिभागादेकभागिकम् २१

चतुर्भागैकभागं च पञ्चभागद्विभागिकम्
निर्गमं गोपुराणां तु प्राकाराद् भित्तिबाह्यतः २२

मूलं सार्धं तु पादोनद्विहस्तं तु द्विहस्तकम्
तत्तत्षडङ्गुलैर्नन्दमात्रैर्द्वादशमात्रकैः २३

वृद्ध्या पञ्चकरान्तं तु सप्तान्तं तु नवान्तकम्
द्वारं त्रिः पञ्चधामानमेकैकं तु पृथक् पृथक् २४

क्षुद्रे मध्ये वरे द्वारविस्ताराः परिकीर्तिताः
तत्तद्वैपुल्यवशतस्तत्तदुत्सेधमुच्यते २५

पञ्चांशेभ्यश्च सप्तांशं सप्तांशेभ्यो दशांशकम्
द्विगुणार्धाधिकं पादाधिकं पञ्चोच्छ्रयाः स्मृताः २६

मूलवस्तु निरीक्ष्यैव पादाधिष्ठानतुङ्गता
चतुष्पञ्चर्तुसप्ताष्टनन्द पङ्क्तीशभानुषु २७

भागेष्वेकैकभागोनं स्वाधिष्ठानान्ततुङ्गकम्
शेषं तदुपपीठं स्यात् पादबन्धं मसूरकम् २८

प्रासादस्तम्भमानं वा वसुभागोनमेव वा
नन्दपङ्क्त्यंशहीनं वा गोपुरस्तम्भतुङ्गकम् २९

छेदयेत् तदधिष्ठानं होमान्तं खातपादकम्
उत्तरान्तं समुत्सेधं तदर्धं द्वारविस्तृतम्  ३०

प्रवेशदक्षिणे गर्भमारूढे भित्तिके भवेत्
श्रीकरं रतिकान्तं च कान्तविजयमेव च  ३१

विजयविशालकं चैव विशालालयमेव च
विप्रतीकान्तं श्रीकान्तं श्रीकेशं च तथा पुनः  ३२

केशविशालकं स्वस्तिकं दिशास्वस्तिकमेव च
मर्दलं मात्रकाण्डं च श्रीविशालं चतुर्मुखम्  ३३

एते पञ्चदश प्रोक्ता गोपुरस्याभिधानकाः
एकादिपञ्चभूम्यन्तं शोभाद्यल्पप्रमाणकम्  ३४

द्वितलादि षट्तलान्तं मध्यमक्रममुच्यते
त्रितलात् सप्ततलपर्यन्तं चोत्तममुच्यते  ३५

सोपपीठमधिष्ठानं पादोच्चमुत्तरान्तकम्
शेषं तत्स्थूपिपर्यन्तं भागमानं विधीयते  ३६

स्थूप्यन्तमुत्तरान्तं च षड्भागं विभजेत् समम्  ३६-२

सपादभागमञ्चोच्चं कन्धरोच्चं तदंशकम्
सत्रिपादद्विभागं तु शिरः शेषं शिखोदयम्  ३७

एवमेकतलं प्रोक्तं द्वितले भागमुच्यते
उत्तरादिशिखान्तं यन्नवधा विभजेत् समम्  ३८

सपादभागमञ्चोच्चं द्व्यंशार्धं चरणायतम्
भागैकं प्रस्तरोत्सेधमेकांशं कन्धरोदयम्  ३९

सार्द्धद्व्यंशं शिरस्तुङ्गं शेषभागशिखोदयम्
एवं द्वितलमाख्यातं त्रितले भागमुच्यते ४०

स्थूप्यन्तमुत्तरान्तं च कृत्वोच्चं द्वादशांशकम्
सपादांशं कपोतोच्चं द्व्यंशार्धं चरणायतम् ४१

भागैकं प्रस्तरोत्सेधं द्विभागं पाददैर्घ्यकम्
त्रिपादं तत्कपोतोच्चमंशं ग्रीवोदयं भवेत् ४२

सार्धद्व्यंशं शिरस्तस्माच्छेषं स्थूप्यौच्छ्रयं भवेत्
एवं त्रितलमाख्यातं चतुर्भौममथोच्यते ४३

उत्तरादिशिखान्तं यन्मानमष्टादशांशकम्
सत्रिपादांशकं मञ्चं त्रिभागं तलिपायतम् ४४

सार्धांशां प्रस्तरोच्चं स्याद् द्व्यंशसार्धं पदोदयम्
सपादभागं मञ्चोच्चं द्व्यंशं स्यात् स्तम्भदैर्घ्यकम् ४५

मञ्चमंशं गलं भागं त्रिभागं शिखरोदयम् ४५-२

शेषभागं शिखामानं पञ्चभौममथोच्यते
स्थूप्यन्तमुत्तरान्तं च त्रयोविंशतिभागिकम् ४६

द्विभागं प्रस्तरोच्चं स्यात् त्र्यंशार्धं चरणायातम्
पादोन द्व्यंशकं मञ्चं पादायामं त्रियंशकम् ४७

सार्धांशमूर्ध्वमञ्चोच्चं द्व्यंशार्धं पाददैर्ध्यकम्
सपादांशं कपोतोच्चं द्व्यंशं स्यात् तलिपायतम् ४८

प्रस्तरोच्चं तु भागेन कन्धरं भागमिष्यते
द्व्यंशार्धं शिखरोत्सेधं शेषं स्थूप्युच्छ्रयं भवेत् ४९

उत्तरादि शिखान्तं स्यादेकोनत्रिंशदंशकम्
द्विभागं प्रस्तरोत्सेधं पादोच्चं चतुरंशकैः ५०

पादोनद्व्यंशकं मञ्चं त्र्यंशार्धं पाददैर्घ्यकम्
सत्रिपादांशकं मञ्चं त्रिभागं तलिपायतम् ५१

सार्धांशं प्रस्तरोत्सेधं द्व्यंशार्धं पाददैर्घ्यकम्
सपादांशं कपोतोच्चमूर्ध्वभागं द्विभागतः ५२

प्रस्तरोच्चं तु भागेन कन्धरं तत्समं भवेत्
सार्धद्व्यंशं शिरस्तस्माच्छेषभागं शिखोदयम् ५३

एवं तु षट्तलं प्रोक्तं सप्तभौममथोच्यते
उत्तरादिशिखान्तं यन्मानं षट्त्रिंशदंशकम् ५४

मञ्चं साङ्घ्रिद्वयं सार्धवेदांशं पाददैर्घ्यकम्
द्विभागं प्रस्तरोत्सेधं पादोच्चं चतुरंशकम् ५५

सत्रिपादांशकं मञ्चं त्र्यंशार्धं चरणायतम्
पादोनद्व्यंशमञ्चोच्चं त्रिभागं पाददैर्घ्यकम् ५६

सार्धांशं प्रस्तरोच्चं तु द्व्यंशार्धं तलिपायतम्
सपादभागमञ्चोच्चमूर्ध्वपादं द्विभागिकम् ५७

कपोतोच्चं तु भागेन तत्समं कन्धरोदयम्
सत्रिपादाश्विनीभागं शिरःशेषं शिखोदयम् ५८

एवं भागानि कर्तव्यान्युर्वीसंख्याक्रमेण तु
विस्तारे पञ्चभागे तु नालीगेहं त्रियंशकम् ५९

शेषं तु भित्तिविष्कम्भमेकभूमेर्विधीयते

विस्तारे सप्तभागं स्याद् गर्भगेहं युगांशकम्  ६०

शेषं तु भित्तिविष्कम्भमेकांशं कूटविस्तृतम्
कोष्ठकं त्र्यंशकं तारे पञ्चांशं स्यात् तदायते  ६१

कूटकोष्ठकयोर्मध्ये पञ्जरादिविभूषितम्
एवं द्वितलमुद्दिष्टं त्रितलस्य विधीयते  ६२

विस्तारे नवभागे तुनालीगेहं त्रियंशकम्
गृहपिण्ड्यलिन्द्रहारा भागेन परिकल्पयेत्  ६३

कूटकोष्ठादिसर्वाङ्गं पूर्ववत् परिकल्पयेत्
शेषं तु भित्तिविष्कम्भमेकांशं कूटविस्तृतम्  ६४

शालायामं त्रिभागं स्यादेकांशं लम्बपञ्जरम्
हाराभागमथार्धं स्यादायामे कोष्ठकायतम्  ६५

पञ्चांशं वा षडंशं वाप्यूर्ध्वे सप्तांशविस्तृतम्
कूटमंशं द्विभागेन शालायामं द्विभागिकम्  ६६

हारायां क्षुद्रनीडं तदर्धभागमिति स्मृतम्
शालायामं तु पञ्चांशमायामे प्रविधीयते  ६७

एवं त्रितलमाख्यातं शेषमूह्यं विचक्षणैः
तारे पङ्क्त्यंशके नालीगेहं तत्त्रिभिरंशकैः  ६८

सार्धांशं भित्तिविष्कम्भमेकभागमलिन्द्रकम्
एकांशं खण्डहर्म्यं स्यात् कूटकोष्ठादि पूर्ववत्  ६९

मुखेऽमुखे महाशाला पञ्चांशं च षडंशकम्
सर्वावयवसंयुक्तं चतुर्भौममिदं वरम्  ७०

तारे रुद्रांशके नालीगेहं तत्त्रिभिरंशकैः
द्विभागं भित्तिविष्कम्भमेकभागमलिन्द्रिकम् ७१

एकांशं खराडहर्म्यं स्याच्छेषं पूर्ववदाचरेत्
एवं पञ्चतलं विद्यात् षट्तलं चाधुनोच्यते ७२

विपुले द्वादशांशे तु नालीगेहं युगांशकम्
द्विभागं भित्तिविष्कम्भमंशेनान्धारकं भवेत् ७३

अंशेन खराडहर्म्यं स्यात् कूटकोष्ठादि पूर्ववत्
तारे त्रयोदशांशे तु गर्भगेहं युगांशकम् ७४

द्व्यंशार्धं भित्तिविष्कम्भमेकभागमलिन्द्रकम्
एकांशं खराडहर्म्यं स्यात् कूटकोष्ठादि पूर्ववत् ७५

मुखेऽमुखे महाशाला षड्भागेन विधीयते
पञ्जरैर्हस्तिपृष्ठैश्च पत्तशालादिभिर्युतम् ७६

नानामसूरकस्तम्भवेदीजालकतोरणम्
एवं सप्ततलं प्रोक्तं गोपुरं सार्वदेशिकम् ७७

मूलद्वारस्य विस्तारे पञ्चभागैकहीनकम्
चतुर्भागैकहीनं वोपरिष्टाद् द्वारविस्तृतम् ७८

उपर्युपरि वेशं च मध्यपादोत्तरैर्युतम्
गर्भागारे तु सोपानं ह्युपर्युपरि विन्यसेत् ७९

चतुष्कर्णे तु सोपानमुपपीठे प्रशस्यते
यथायुक्ति यथाशोभं तथा योज्यं विचत्तरौः ८०

गोपुराणामलङ्कारं प्रत्येकं वद्त्यतेऽधुना

मण्डपाभा यथा द्वारशोभा तत्र प्रकीर्तिता  ८१

दण्डशाला यथा द्वारशाला तत्र विधीयते
प्रासादाकृतिवद् द्वारप्रासादं प्रोच्यते बुधैः  ८२

मालिकाकृतिवद् द्वारहर्म्यं तु प्रोच्यते बुधैः
सशालाकृतिसंस्थानं द्वारगोपुरमिष्यते  ८३

सर्वेषु गोपुरं कुर्याद् यथायुक्ति विशेषतः
श्रीकरस्याप्यलङ्कारं प्रवक्ष्याम्यनुपूर्वशः  ८४

विस्तारद्विगुणं वाऽपि पादोनद्विगुणायतम्
पञ्चसप्त नवांशं तु विस्तारे प्रविधीयते  ८५

विस्तारांशप्रमाणेन दैर्घ्यभागांश्च कल्पलयेत्
एकद्वित्रितलोपेतं सर्वावयवसंयुतम्  ८६

स्वस्तिकाकृतिकं नासो सर्वत्र प्रविधीयते
मुखेऽमुखे महानासी वंशनासी द्विपार्श्वयोः  ८७

शिरःक्रकरकोष्ठं वा युग्मस्थूपिसमायुतम्
लुपारोहिशिरो वाऽपि मण्डपाकृतिरेव वा  ८८

रतिकान्तस्य संस्थानं विस्ताराध्यर्धमायतम्
कूटकोष्ठादि सर्वाङ्गं पूर्ववत् परिकल्पयेत्  ८९

शालाकारशिरस्तस्मिन् षण्णासी मुखपृष्ठयोः
सार्धकोटिसमायुक्तं युग्मस्थूपिसमायुतम्  ९०

अन्तः पादोत्तरैर्युक्तं मध्यवेशनसंयुतम्
कान्तविजयसंस्थानं तारत्रिद्व्यंशमायतम्  ९१

पूर्ववद् भूमिभागं च कूटकोष्ठादि पूर्ववत्
अन्तःपादोत्तरैर्युक्तं नानाङ्गैः समलङ्कृतम् ९२

शिखरे च मुखे पृष्ठे षरणास्यः पार्श्वयोर्द्वयोः
सभाकार शिरस्तस्मिन्नयुग्मस्थूपिकान्वितम् ९३

द्वारशोभात्रयं प्रोक्तं द्वाराङ्गं मुखशोभितम्
विजयविशालसंस्थानं विस्तारद्विगुणायतम् ९४

सपादं वाऽथ सार्धं वा पादोनद्विगुणायतम्
सप्तनन्दशिवांशैश्च तलं द्वित्रिचतुष्टयम् ९५

सालिन्द्रे त्रिचतुर्भौमौ चतस्रो मुखपट्टिकाः
मुखे पृष्ठे महानासी सार्धकोटि सभद्रकम् ९६

पार्श्वयोः पञ्जरैर्युक्तं शालाकारशिरः क्रियम्
अयुग्मस्थूपिकोपेतं सर्वावयवसंयुतम् ९७

विशालालयसंस्थानं पादोनद्विगुणायतम्
पूर्ववद् भूमिभागं च कूटकोष्ठाद्यलङ्कृतम् ९८

अर्धकोटि सभद्रं स्याद् भद्रनासी मुखेऽमुखे
चतस्रः पार्श्वयोर्नास्यः शालाशिखरसंयुतम् ९९

अयुग्मस्थूपिकोपेतं शेषं पूर्ववदाचरेत्
विप्रतीकान्तसंस्थानं त्र्यंशे द्व्यंशाधिकायतम् १००

कूटकोष्ठादि सर्वाङ्गं पूर्ववत् परिकल्पयेत्
पूर्ववद् भूमिभागं च चतुर्दिग्गतभद्रकम् १०१

चतस्रः शिखरे नास्यः शिरो भद्रसमन्वितम्

अन्तः पादोत्तरैर्युक्तमयुग्मस्थूपिकान्वितम् १०२

द्वारशालात्रयं प्रोक्तं सर्वाङ्गं परिमण्डितम्
श्रीकान्तस्य च संस्थानं विस्ताराध्यर्धमायतम् १०३

नन्दपङ्क्तिशिवांशैश्च त्रिचतुष्पञ्चभूमयः
अन्तः पादोत्तरैर्युक्तमन्धाराद्यैरलङ्कृतम् १०४

द्वारस्योर्ध्वेऽन्तरे रङ्गं परिभद्रसमन्वितम्
मुखेऽमुखे महानासी शालाकारशिरो भवेत् १०५

अर्धकोटिसमायुक्तं चतुष्पञ्जरशोभितम्
श्रीकेशस्य तु संस्थानं तारत्रिभागमायतम् १०६

पूर्ववद् भूमिभागं च द्वारे निर्गमकुट्टिमम्
सान्धारं कूटकोष्ठादिसर्वावयवसंयुतम् १०७

नानामसूरकस्तम्भवेदिकाद्यैरलङ्कृतम्
अन्तः पादोत्तरैर्युक्तं मध्ये वारणशोभितम् १०८

मुखेऽमुखे महानासी शालाकारशिरःक्रियम्
पार्श्वयोर्वेदनास्यः स्युः सर्वावयवशोभितम् १०९

स्वस्तिकाकृतिवन्नासी सर्वत्र परिशोभिता
नन्द्यावर्तगवाक्षादिजालकाद्यैर्विचित्रितम् ११०

केशविशालसंस्थानं विस्ताराध्यर्धमायतम्
पूर्ववद् भूमिभागं च मध्यवारणशोभितम् १११

कूटकोष्ठाद्यलङ्कारं पूर्ववत् प्रकल्पयेत्
मुखे पृष्ठे द्विपार्श्वे तु महानासीचतुष्टयम् ११२

सभाकारशिरस्तस्य मुखे पृष्ठे द्विपार्श्वयोः
अयुग्मस्थूपिकायुक्तं द्वारप्रासादकत्रयम्  ११३

स्वस्तिकस्य तु संस्थानं विस्तारद्विगुणायतम्
पङ्क्तिरुद्रार्कभागैस्तु वेदपञ्चर्तुभूमयः  ११४

अन्तः पादोत्तरैर्युक्तं भूमिभागं च पूर्ववत्
कूटकोष्ठादिसर्वाङ्गैरन्धाराद्यैरलङ्कृतम्  ११५

सभाशिखरसंयुक्तं स्वस्तिकाकृतिनासियुक्
अष्टनासि सभाग्रे तु अयुग्मस्थूपिकान्वितम्  ११६

दिशास्वस्तिकसंस्थानं विस्तारद्विगुणायतम्
पूर्ववद् भूमिभागं च कूटकोष्ठाद्यलङ्कृतम्  ११७

अन्धार्यन्धारहाराङ्गं खण्डहर्म्याभिमण्डितम्
मुखेऽमुखेऽतिभद्रांशं शिरश्चायतमण्डलम्  ११८

महानासि चतुर्युक्तं चतुष्पञ्जरशोभितम्
अन्तःपादोत्तरैर्युक्तं सर्वावयवसंयुतम्  ११९

अनुक्तं पूर्ववत् सर्वमयुग्मस्थूपिकान्वितम्
मर्दलस्य तु संस्थानं विस्तारद्विगुणायतम्  १२०

पूर्ववद् भूमिभागं च कूटकोष्ठाद्यलङ्कृतम्
पुरे पृष्ठे सभाग्रं स्याद् विस्तारत्र्यंशनिर्गमम्  १२१

शालाकारशिरोयुक्तं क्षुद्रनासीविभूषितम्
मुखे पृष्ठे महानासी चतुष्पञ्जरशोभितम्  १२२

अन्तः पादोत्तरैर्युक्तं द्वारहर्म्यं त्रिधोदितम्

मात्राकाण्डस्य संस्थानं विस्तारद्विगुणायतम्  १२३

रुद्रार्क त्रयोदशांशैः पञ्चषट्सप्तभूमयः
पूर्ववद् भूमिभागं च कूटकोष्ठादि पूर्ववत्  १२४

अन्तःपादोत्तरैर्युक्तं चतुर्दिग्गतभद्रकम्
गृहपिण्डयलिन्द्रहाराभिर्मण्डितं खण्डहर्म्यवत्  १२५

शालाकारशिरः कुर्यान्महानासी मुखेऽमुखे
पार्श्वयोः क्षुद्रनास्यश्च यथायुक्त्या प्रयोजयेत्  १२६

श्रीविशालस्य संस्थानं पचांशे द्व्यंशमायतम्
पूर्ववद् भूमिभागं च मूलतः क्रकरीकृतम्  १२७

शिरः क्रकरकोष्ठं च सभा वा तत्र शीर्षकम्
नानामसूरकस्तम्भवेदिकाद्यैरलङ्कृतम्  १२८

चतुर्दिक्षु महानासी क्षुद्रनासीविभूषिता
स्वस्तिकाकृतिवन्नास्यः सर्वत्र परिकल्पयेत्  १२९

चतुर्मुखस्य संस्थानं चतुर्भागाधिकायतम्
पुर्ववद् भूमिभागं च दिशाभद्रकसंयुतम्  १३०

हारामध्ये तु कर्तव्यं कुडयकुम्भलतान्वितम्
तोरणैर्जालकैर्वृत्तस्फुटिताद्यैरलङ्कृतम्  १३१

कूटैर्नीडैस्तथा कोष्ठैः क्षुद्रकोष्ठैर्विभूषितम्
गृहपिण्डयलिन्द्रहाराभिर्मण्डितं खण्डहर्म्यवत्  १३२

सभाशिरस्तु वा शालाकारं वा शीर्षकं तु तत्
चतुर्नासिसमायुक्तं पार्श्वे द्वे द्वे तु नासिके  १३३

उपर्युपरिकूटाद्यैः सर्वाङ्गैः समलङ्कतम्
अन्तः सोपानसंयुक्तं द्वारगोपुरकं त्रिधा १३४

वर्षस्थलसमोपेतं निर्वारितलकं तु वा
घनाघनाङ्गयुक्तानि श्रीकरादीनि युक्तितः १३५

नानाविधस्तम्भमसूरकाणि नानाविधाङ्गानि सलक्षणानि
नानोपपीठानि समण्डकानि भद्राण्यभद्राणि घनाघनानि १३६

एकादिसप्तान्ततलानि युक्त्या शोभादिपञ्चादशगोपुराणि
शालासभामण्डपशीर्षकाणि प्रोक्तानि सद्मन्यमरेश्वराणाम् १३७

इति मयमते वस्तुशास्त्रे गोपुरविधानं नाम चतुर्विंशोऽध्यायः

## अथ पञ्चविंशोऽध्यायः

मण्डपसभाविधानम्

देवानां द्विजभूमीशवैश्यानां शूद्रजन्मनाम्
तत्तद्योग्यं यथायुक्त्या मण्डपं प्रविधीयते १

प्रासादाभिमुखे पुण्यक्षेत्रे वारामके शुभे
ग्रामादिवस्तुमध्ये च चतुर्दिक्षु विदिक्ष्वपि २

बाह्याभ्यन्तरतो वाऽपि गृहाणां मध्यमे मुखे
वासार्थमण्डपं चैव यागमण्डपमेव च ३

अभिषेकादियोग्यं च नृत्तमण्डपकं तथा
वैवाहिकं च मैत्रं च तथोपनयनार्हकम् ४

आस्थानमण्डपं चैव बलालोकनमण्डपम्
सन्धिकार्यार्हकं क्षौरं भुक्तिकर्मसुखान्वितम् ५

तेषां क्रमेण नामानि वक्ष्यन्ते विधिनाऽधुना

मेरुकं विजयं सिद्धं पद्मकं भद्रकं शिवम्  ६

वेदं चालङ्कृतं दर्भं कौशिकं कुलधारिणम्
सुखाङ्गं सौख्यकं गर्भं माल्यं माल्याद्भुतं तथा  ७

देवद्विजनरेन्द्राणां द्विरष्टचतुरश्रकम्
धनं सुभूषणाख्यं चाप्याहल्यं स्त्रुगकं तथा  ८

कोणं च खर्वटं चैव श्रीरूपाख्यं च मङ्गलम्
एतान्यष्टौ सुरादीनां नृपाणामायताश्रकम्  ९

मार्गं सौभद्रकं चैव सुन्दराख्यं तु मण्डपम्
साधारणं च सौख्यं च तथैवेश्वरकान्तकम्  १०

श्रीभद्रं सर्वतोभद्रमित्यष्टौ वैश्यशूद्रयोः
भक्तिमानं तथा पादायामं पादविशालकम्  ११

अधिष्ठानं तदाधारं प्रपां मध्यमरङ्गकम्
अलङ्कारं क्रमाद् वक्ष्ये स्तम्भपक्षं तदाकृतम्  १२

सार्धहस्तं समारभ्य षट्षडङ्गुलवर्धनात्
पञ्चहस्तावधिर्यावत् त्रिः पञ्चैवाङ्घ्रिकान्तकम्  १३

अथ विस्तार भक्त्यैषामायामं प्रविधास्यते
एकद्वित्रिचतुष्पञ्चभागे भक्त्यन्तरे कृते  १४

एकभागेन वृद्धिः स्यादायामं स्वविशालतः
अथ स्वभक्तिविसृतात् त्रिमात्रद्ध्या करान्ततः  १५

आयाममष्टधा प्रोक्तं तेन मानेन योजयेत्
सायतं चापि तत् सर्वं तन्नाम्नैव प्रपद्यते  १६

सार्धद्विहस्तमारभ्य षट्षडङ्गुलवर्धनात्
अष्टहस्तान्तमङ्घ्र्युच्चं त्रयोविंशत्प्रमाणकम्  १७

त्रित्र्यङ्गुलविवृद्धया वा स्तम्भोत्सेधाः प्रकीर्तिताः
अष्टाङ्गुलं समारभ्यैवार्धाङ्गुलवर्धनात्  १८

नन्दपङ्क्त्यङ्गुलं यावत् संख्यया पूर्ववत् ततिः
पादोच्चैरपि रुद्रांशधर्मनन्दाष्टभाजिते  १९

मूलतारं तु भागेन तत्तद्भागोनमग्रतः
पादोच्चार्धमधिष्ठानं सामान्यं सर्ववस्तुषु  २०

पादोच्चे पञ्चभागे तु द्विभागोच्चं तु वा तलम्
स्तम्भोत्सेधत्रिभागैकं वा मसूरकतुङ्गकम्  २१

सोपपीठमधिष्ठानं केवलं वा मसूरकम्
अधिष्ठानसमोच्चं वा द्विगुणं त्रिगुणं तु वा  २२

उपपीठविधाने तु यदुक्तं तेन वोन्नतम्
उपपीठसमुत्सेधं यथायुक्ति यथारुचि  २३

उपपीठतलस्तम्भ प्रस्तरालङ्कृतिक्रमम्
प्राग्वदेव समुद्दिष्टं शेषं युक्त्या समाचरेत्  २४

अधिष्ठानोपरिस्तम्भं प्रस्तरं च त्रिवर्गकम्
कपोतप्रतिसंयुक्तं यत् तन्मराडपमिष्यते  २५

मराडं सुभूषरां तं पातीति मराडपमिष्यते
सामान्यं सर्ववर्णानां प्रपारूपं वदाम्यहम्  २६

प्रपारूपाङ्गपादान्ते चोत्तरादूर्ध्ववंशकम्

प्राग्वंशमनुवंशं च नालिकेरदलादिभिः  २७

अन्यैरपि तथा पत्रैर्द्रव्यैः प्रच्छादिता प्रपा
प्राग्वदेवाङ्घ्रिकायामं चतुःषडष्टदशाङ्गुलम्  २८

पादविष्कम्भमेतेषां प्रमाणं सारदारुजम्
त्वक्सारं च यथालाभं तथा तत्र प्रयोजयेत्  २९

पादोच्चे पङ्क्ति नन्दाष्टसप्तषट्पञ्चभागिके
वेदिकोच्चं तु भागेन मध्ये रङ्गं प्रयोजयेत्  ३०

स्तम्भोत्सेधचतुर्भागे भागेनैव मसूरकम्
द्विभगं तलिपायामं भागेन प्रस्तरं भवेत्  ३१

युग्मायुग्मद्विभक्त्यैकभक्त्या वा तद्विशालकम्
अष्टस्तम्भसमायुक्तं चतुःस्तम्भान्वितं तु वा  ३२

प्रपादीनां तु संस्थानं यथा वा रङ्गमीरितम्
सर्वावयवसंयुक्तं मिश्रद्रव्यसमन्वितम्  ३३

शालासभाप्रपाणां तु मण्डपानां तु मध्यमे
प्रतिष्ठितचतुःस्थानं त्रिमानं रङ्गमिष्यते  ३४

मण्डपोपरि भूमिस्तु मालिकामण्डपं भवेत्
मण्डपोर्ध्वे सशिखरं द्वितलं यदि सम्भवम्  ३५

मध्यस्थभूमिदेशत्वात् प्रतिमध्यं तदुच्यते
मेरुकं चतुरश्रं स्याच्चतुष्पादेकभक्तिकम्  ३६

नासिकाष्टकसंयुक्तं ब्रह्मासनमिति स्मृतम्
द्विभक्तिचतुरश्रं तु विजयं नाम मण्डपम्  ३७

अष्टपादसमायुक्तमष्टनास्या विभूषितम्
अधिष्ठानादिवर्गाढ्यं त्यक्तमध्यस्थपादकम्  ३८

नवपादसमायुक्ता प्रपा कल्याणकारिता
त्रिभक्ति चतुरश्रं तु षोडशस्तम्भसंयुतम्  ३९

नासिकाभिर्द्विरष्टाभिर्युक्तं मध्येऽङ्कणान्वितम्
मध्योर्ध्वकुटयुक्तं वा चतुर्द्वारसमन्वितम्  ४०

चतुर्दिक्षु बहिर्द्वारि चतुस्तोरणभूषितम्
यागादिकर्मयोग्यं स्याद् देवद्विजमहीभृताम्  ४१

नाम्ना सिद्धमिति प्रोक्तं सर्वकर्मसु पूजितम्  ४१-२

कृत्वैकाशीतिभागान् निशितविपुलधीर्मराडपाभ्यन्तरं त
न्मध्ये वेदी नवांशा भवति हि परितस्त्रीणि भागानि मध्ये
अश्रं योन्यर्धचन्द्रं गुणभुजमपरं वै सुवृत्तं षडश्रं
पद्मं वस्वश्रकुराडं सुरपतिभवनादिक्रमेणैव कुर्यात्  ४२-२

हस्तविस्तृतनिखातवच्चतुष्कोटिकं दिशि दिशि त्रिसूत्रकम्
सत्रिमेखलमथ द्विकं तु वा धातुभूतगुणमात्रकोन्नतम्  ४३-२

व्यासमब्ध्यनलपक्षमात्रकैर्योनिमूर्ध्वत इभोष्ठवत् कुरु
तारदैर्घ्यकसमुद्गमं चतुःषराणमनोङ्गुलिभिरग्निसंमुखम्  ४४-२

वेदबन्धनयनाङ्गुलोन्नतव्यासमेखलयुतं तु वा क्पुनः
तालगाढमथवैकमेखलं सर्वकुराडकमकर्णयोनिकम्  ४५-२

वृत्तसन्निभमथो तदाकृतिं वा युगेषुरसमात्रवैपुलम्
व्यासवेदगुणभागतुङ्गकं नाभिमब्जमिव कुराडमध्यमे  ४६-२

न्यस्यैकांशं पञ्चभागे पुरस्तात्कोणस्यार्धार्धं गृहीत्वा ततस्तत्
कोणं यावद् भ्रामयेत् तद्वदन्यद्योन्याकारं स्याद् द्विसूत्रप्रयोगात् ४७-२

व्यासे धर्मांशेऽशमूर्ध्वादधस्तान्नीत्वैव ज्यासूत्रकं पातयित्वा
तन्मानेन भ्रामयेदर्धचन्द्रं कुण्डं युक्त्या वस्तुविद्याविधिज्ञैः ४८-२

क्षेत्रव्यासे षट्कृते चाष्टभागे मानेनानेन त्रिसूत्रं न्यसेद्धि
त्र्यश्रं प्रोक्तं द्विर्नवांशेऽशकं तद्बाह्ये न्यस्य भ्रामयेद् वृत्तकुण्डम् ४९-२

व्यासे बुद्ध्यंशेऽशकं पार्श्वयोस्तद्बाह्ये न्यस्यानेन मानेन दध्यात्
मत्स्यं कृत्वा युग्मयुग्मं द्विपार्श्वात्षट्कोणं स्यात् पातयेत् सूत्रषट्कम्
५०-२

वृत्तं कृत्वा पूर्ववत् तस्य मध्ये वृत्तं भ्राम्यं यत्र यन्मध्यतस्तत्
पद्मस्याकारं यथा कर्णिकादीन्कुर्याद् दिद्वान् पद्मकुण्डं क्रमेण ५१-२

क्षेत्रव्यासे षट्चतुर्भागिकेऽस्मिन्भागं बाह्ये न्यस्य सूत्रं समन्तात्
कोणस्यार्धं कोणकाभ्यां तु लेख्यं ह्यष्टाश्रं स्यादष्टसूत्रप्रयोगात् ५२-२

तारे पङ्क्त्यंशेऽशकं न्यस्य बाह्ये वृत्तं भ्राम्यं क्षेत्रकेऽष्टाष्टभागे
सैकैर्वेदाष्टांशकैः पट्टदैर्घ्यं सप्ताश्रं स्यात् सप्तसूत्रप्रयोगात् ५३-२

व्यासे सप्तांशेऽशकं न्यस्य बाह्ये वृत्तं भ्राम्यं क्षेत्रतारे युगांशे
पट्टायामं त्रिप्रभागैरनेन पञ्चाश्रं स्यात् पञ्चसूत्रप्रयोगात् ५४-२

तत्तद्ध्येयोपात्तभागेषु तत्तद्भागं कृत्वा प्रागिवैकैकभागे
न्यूनाधिक्येनाश्रनाहस्य तुल्यं युक्त्या धीमान् योजयेत् सर्वकुण्डम्
५५-२

भूते साङ्घ्रित्रिबीजं मुनिषु च नयनं षोडशेष्वंशयुक्तं
सत्र्यङ्घ्र्येकं नवांशे शिवपदविहिते सार्धकं सैकभानौ

साङ्घ्र्येकं बीजमेवोदितमथ तिथिके षोडशांकहीनं
सप्ताधिक्ये दशांशे नवदशपदकेऽष्टांशहीनं क्रमेण ५६-२

तदेव धाम्नामग्रे तु कर्तव्यं चेन्मसूरकम् ५७

स्तम्भप्रस्तर वर्गं च प्रासादाङ्गसमं मतम्
एकद्वि द्वारयुक्तं वा कुडयं कुम्भलतान्वितम् ५८

एकद्वित्रिगुणस्तम्भव्यासं मध्ये तु भद्रकम्
तोरणाढयं सुरोपेतसर्वावयवशोभितम् ५९

धाम्नस्तु भित्तिविष्कम्भसमं वार्धार्धहीनकम्
त्रिभागैकविहीनं तद्भित्तिविष्कम्भिमिष्यते ६०

सान्तरालं सवेशं च सर्वेषां सद्मनां मुखे
चतुरश्रं चतुर्भक्त्या चतुर्द्वारसमन्वितम् ६१

मुखेऽमुखे द्विभक्त्यैकभक्त्या विस्तारनिर्गमम्
मध्यमस्तम्भकं त्यक्त्वैवोर्ध्वकूटं द्विभक्तिकम् ६२

षट्त्रिंशत्पादसंयुक्तं चतुस्सप्ताल्पनासिकम्
सोपानं स्याच्चतुर्दिक्षु लाङ्गलाकारभित्तिकम् ६३

पञ्जैरष्टभिर्युक्तं पद्मकं पद्मकप्रभम्
स्नानार्थं तैतिलानां तु प्रासादाभिमुखे मतम् ६४

तदेवैकाननोपेतं मध्याङ्गणसमन्वितम्
यागादिकर्मयोग्यं स्यादिष्टतो दिशि वारणम् ६५

भद्रकं पञ्चभागेन चतुरश्रसमाकृति
मध्ये कूटं त्रिभागेन परितोंऽशेन मराडपम् ६६

द्वात्रिंशत्पादसंयुक्तं चतुर्विंशतिनासिकम्
पञ्जरैरष्टभिर्युक्तं कुडयं कुम्भलतान्वितम्  ६७

चतुर्दिक्षु चतुर्द्वारं कर्णे लाङ्गलभित्तिकम्
मध्यमेऽङ्गणयुक्तं वा त्रिभक्त्या विस्तृताङ्घ्रिकम्  ६८

धाम्नः स्थलसमं तस्य पङ्क्त्यष्टांशोनमेव वा
नृत्तमण्डपमेतत् स्यात् स्नानार्थं वा तदेव हि  ६९

षड्भक्ति चतुरश्राभं मध्येऽष्ट स्तम्भकूटकम्
द्विभक्तिविस्तृतं चैकभक्त्या निष्क्रान्त वक्रकम्  ७०

षष्ट्यङ्घ्रिकसमायुक्तं त्यक्तमध्यस्थपादकम्
चतुर्विंशतिनास्यङ्गं सर्वालङ्कारसंयुतम्  ७१

शिवाख्यं मण्डपं सर्ववासे योग्यं सनातनम्
सप्तांशचतुरश्राभं षष्ट्यङ्घ्रिकसमावृतम्  ७२

नवभागेन तन्मध्ये कूटं वा मण्डिताङ्गणम्
सद्वात्रिंशति नास्यङ्गं चतुर्दिशि सवारणम्  ७३

त्रिभागैकांशविस्तारनिर्गमं मुखभद्रकम्
मध्यरङ्गसमोपेतमिष्टदिग्गतभित्तिकम्  ७४

आस्थानमण्डपं चैतत् तैतिलानां महीभृताम्
अभिषेकादिकार्येषु योग्यं वेदमिति स्मृतम्  ७५

अष्टभक्त्या युगाश्रं स्यादशीति पादसंयुतम्
चतुर्भागोर्ध्वकूटं तु द्विभागेन तु भद्रकम्  ७६

चतुर्दिशि चतुर्द्वारं पार्श्वे सोपानसंयुतम्

सर्वालङ्कारसंयुक्तमलङ्कृतमिति स्मृतम् ७७

तदेव जलपादं तु ब्रह्मस्थलमितीष्यते
परितो वारमेकांशं द्व्यंशेनावृतमरडपम् ७८

पूर्ववन्मुखभद्रं स्यादिष्ट दिग्गतभद्रकम्
ब्रह्मस्थाने विधातव्यं ग्रामादीनां सनातनम् ७९

नवभक्ति युतं सम्यक् पङ्कितपङ्क्त्यङ्घ्रिकान्वितम्
त्र्यंशैकविस्तृतं भद्रं चतुर्द्वारसमन्वितम् ८०

सोपानं प्रमुखे तस्य कर्णे लाङ्गलभित्तिकम्
नवरङ्गैरलङ्कुर्यात् षडष्टैवाल्पनासिकम् ८१

नवब्रह्म सुपूज्यं तद् ग्रामवेश्मादिमध्यगम्
सर्वालङ्कारसंयुक्तं दर्भाख्यं तन्मनोहरम् ८२

दशांशचतुरश्राभं सद्वादश शताङ्घ्रिकम्
नवकूटसमायुक्तमेकैकांशान्तरालकम् ८३

एतत् कौशिकमित्युक्तं चतुरश्रं तु जातिकम्
नन्दमेकानने भद्रं द्विमुखं भद्रकौशिकम् ८४

त्रिमुखं जयकोशं स्यात् पूर्णकोशं चतुर्मुखम्
अधिष्ठानाङ्घ्रिवत् कर्णे लाङ्गलाकारभित्तिकम् ८५

सर्वालङ्कारसंयुक्तं षडष्टैवाल्पनासिकम्
एकादशविभागेन समं तु चतुरश्रकम् ८६

परितो मरडपं तस्य बाह्ये भागेन कारयेत्
चतुष्कर्णे द्विभागेन चतुष्कूटसमन्वितम् ८७

चतुर्दिग्द्वित्रिभक्त्या तु विपुलायतकोष्ठकम्
त्रिभक्तिचतुरश्रं तु मध्यरङ्ग्यूर्ध्वकूटकम् ८८

कूटशालान्तरे तस्य क्रकरीकृतमार्गकम्
जात्यादिमुखभद्राङ्गं सर्वावयवशोभितम् ८९

ऊर्ध्वे सभाङ्गनीडाङ्गं प्रस्तरं नवबोधकम्
विवृतं संवृतं वापि गुह्यागुह्यार्थमाचरेत् ९०

कुलधारणमित्युक्तं समं तु चतुरश्रकम्
भागैर्द्वादशभिर्युक्तं समं तु चतुरश्रकम् ९१

अष्टदिक्षु च मध्ये तु द्विभक्त्यैवोर्ध्वकूटकम्
तत्तद्बाह्ये तु भागेन परितोऽलिन्द्रमिष्यते ९२

अङ्गणं वा सभास्थानं कर्णे लाङ्गलभित्तिकम्
चतुर्द्व्यंशेन विस्तारं निर्गमं स्याच्चतुर्दिश ९३

पार्श्वे सोपानसंयुक्तं पञ्चैरैरष्टभिर्युतम्
षष्ट्युत्तरशतस्तम्भमाद्यङ्गे प्रविधीयते ९४

युक्त्या नास्यङ्गसंयुक्तं सुखाङ्गं नाम मण्डपम्
सौख्यं त्रयोदशांशेन चतुरश्रसमाकृति ९५

परितो मण्डपं द्व्यंशं भागेन क्रकरीपथम्
त्रिभागं मध्यरङ्ग्यूर्ध्वकूटं सस्थूपि नीव्रकम् ९६

चतुष्कर्णे द्विभागेन त्यक्तमध्याङ्घ्रिकूटकम्
दिक्षु द्वित्र्यंशविस्तारायामं कोष्ठचतुष्टयम् ९७

नन्दादिमुखभद्राङ्गमिष्टदिग्गत कुड्यकम्

चतुरशीतिभिर्युक्त शतस्तम्भसमन्वितम् ९८

सर्वालङ्कारसंयुक्तं देवद्विजमहीभृताम्
द्विःसप्तभक्तिविस्तारं समं तु चतुरश्रकम् ९९

द्विभक्त्या गर्भकूटं स्यादेकांशालिन्द्रमावृतम्
एकांशमन्तरालं स्यादप्रच्छन्नतलान्वितम् १००

चतुष्कर्णे द्विभक्त्यैवमङ्गणं वोर्ध्वकूटकम्
द्विचतुर्विस्तृतायामं कोष्ठं वाङ्गणकं दिशि १०१

तेषां बाह्ये तु भागेन परितोऽलिन्द्रमिष्यते
इष्टदिक्कुड्यसंयुक्तमिष्टदिग्भद्रसंयुतम् १०२

साष्टद्विशतपादं स्यादाद्यङ्गे तु विधीयते
देवद्विजनरेन्द्राणां गर्भाख्यं तन्मनोहरम् १०३

त्रिःपञ्चभक्तिविस्तारं समं तु चतुरश्रकम्
त्रिभागं मध्यरङ्गयूर्ध्वकूटं वाङ्गणमेव वा १०४

परितोऽलिन्द्र मंशेन भागैकेनान्तरालकम्
शेषं पूर्ववदुद्दिष्टं कोष्ठकं भागतोऽधिकम् १०५

द्वात्रिंशदिद्वशतं पादमाद्यङ्गे प्रविधीयते
सर्वालङ्कारसंयुक्तं माल्याख्यं मण्डपं भवेत् १०६

माल्याद्भुतं समाश्रं तु भागैः षोडशभिर्युतम्
द्विभक्त्यैवोर्ध्वकूटं तु भागेनालिन्द्रमावृतम् १०७

द्व्येकभक्त्या मुखे भद्रं कर्णे लाङ्गलभित्तिकम्
पार्श्वे सोपानसंयुक्तं चित्रप्रस्तरसंयुतम् १०८

तद्बहिर्द्व्यंशमानेन जलपादं समन्ततः
तद्बाह्ये तु चतुर्भक्त्या परितो मण्डपं भवेत् १०९

द्विभक्तिचतुरश्राभमेकांशं व्यवधानकम्
द्विरष्टाङ्गणं तन्मध्ये परितः प्रविधीयते ११०

कर्णे लाङ्गलकुड्यं स्यादूर्ध्वे हाराभिमण्डितम्
चतुर्द्विभक्तिविस्तारनिर्गमं दिक्षु भद्रकम् १११

पार्श्वे सोपानसंयुक्तं सर्वालङ्कारसंयुतम्
देवद्विजनरेन्द्राणां चतुरश्रं द्विरष्टधा ११२

इत ऊर्ध्वं द्विपार्श्वैकवृद्ध्या द्वात्रिंशदंशकम्
विस्तारं चतुरश्राभं मण्डपं कारयेद् बुधः ११३

विवृतं संवृतं वापि कुड्यस्तम्भं प्रयोजयेत्
यथायुक्ति यथाशोभं तथा कुर्याद् विचक्षणः ११४

एतेषामायताश्राभं मण्डपं प्रविधीयते
त्रिभक्तिविस्तृतं तस्माद् द्विभक्त्याधिकमायतम् ११५

पुरतो वारमेकांशं त्रिरष्टाङ्घ्रिसमन्वितम्
विंशन्नास्यङ्गसंयुक्तं धनाख्यं तद्धनावहम् ११६

विस्तारं चतुरंशैस्तु तस्माद् द्व्यंशाधिकायतम्
मण्डपं परितो भक्त्या शेषमङ्गणकं भवेत् ११७

द्विभक्तिविस्तृतं चैकभक्त्या तन्मुखभद्रकम्
चतुरष्टाङ्घ्रिसंयुक्तमाद्यङ्गेषु बहिर्बहिः ११८

सर्वालङ्कारसंयुक्तं सुभूषणमिति स्मृतम्

पञ्चरक्त्या विशालं तु तस्माद् द्व्यंशाधिकायतम्  ११९

मराडपं परितोंऽशेन शेषं कूटं तु वाङ्गणम्
त्रिभक्तिविस्तृतं चैकभक्त्या तन्मुखभद्रकम्  १२०

आद्यङ्गमष्टपञ्चाङ्घ्रिसंयुक्तं तद्विचित्रकम्
सर्वालङ्कारसंयुक्तमाहल्यं सर्वदेशिकम्  १२१

षड्भक्तिविस्तृतं तस्माद् द्विभक्त्यधिकमायतम्
चतुर्द्विभक्तिकं दैर्घ्यव्यासमध्ये सभोदयम्  १२२

परितो मराडपं द्व्यंशमिष्टदिङ्मुखभद्रकम्
षष्ट्यङ्घ्रियुतमाद्यङ्गं युक्त्या नास्यङ्गसंयुतम्  १२३

सर्वालङ्कारसंयुक्तं स्त्रुगाख्यं तन्मनोहरम्
सप्तभक्त्या विशालं तु तस्माद् द्व्यंशाधिकायतम्  १२४

त्रिभक्तिविस्तृतं पञ्चभक्तिदैर्घ्यं सभाङ्गणम्
परितो मराडपं द्व्यंशमिष्टदिग्गतभित्तिकम्  १२५

त्रिभक्तिविस्तृतं भागनिर्गमं मुखभद्रकम्
युक्त्या नास्यङ्गसंयुक्तं द्विसप्तत्यङ्घ्रिकान्वितम्  १२६

सर्वालङ्कारसंयुक्तं कोणाख्यं मराडपं भवेत्
अष्टभक्त्या विशालं तु तस्माद् द्व्यंशाधिकायतम्  १२७

द्विचतुर्भागविस्तारायामं मध्ये जलस्थलम्
परितोऽलिन्द्रमेकांशं बाह्ये द्व्यंशेन मराडपम्  १२८

त्यक्तमध्याङ्घ्रिसंयुक्तमिष्टदिग्गताभित्तिकम्
साष्टषष्ट्यङ्घ्रिसंयुक्तं पूर्ववन्मुखभद्रकम्  १२९

प्रमुखे वारमेकांशं मुखं सोपानसंयुतम्
नानालङ्कारसंयुक्तं सुरादीनां तु खर्वटम्  १३०

नवभक्तिविशालं तु तस्माद् द्व्यंशाधिकायतम्
एकत्र्यंशं तु विस्तारायामं मध्ये जलस्थलम्  १३१

परितोऽलिन्द्रमेकांशं बाह्ये द्व्यंशेन मण्डपम्
त्यक्तमध्याङ्घ्रिसंयुक्तं बाह्ये वारं तु भागतः  १३२

षण्णवत्यङ्घ्रिसंयुक्तं यथेष्टं द्वारभित्तिकम्
वारयुक्तमवारं वा पूर्ववन्मुखभद्रकम्  १३३

नानावयवसंयुक्तं नाम्ना श्रीरूपमिष्यते
पङ्क्तिभागविशालं तु तस्माद् द्व्यंशाधिकायतम्  १३४

द्विचतुर्भागविस्तारायामं मध्ये सभोदयम्
परितोऽलिन्द्रमेकांशं भागेन जलपातनम्  १३५

तद्बाह्ये द्व्यंशमानेन परितो मण्डपं भवेत्
स्तम्भं कुड्यं मुखं भद्रं यथेष्टं परिकल्पयेत्  १३६

अथवा मध्यकूटं चाप्यलिन्द्रं चापि पूर्ववत्
जलस्थलं विना सर्वं मण्डपं परिकल्पयेत्  १३७

द्विभक्त्या चतुरश्रं तु षट्कूटं पार्श्वयोर्मतम्
द्विचतुर्भागविस्तारदैर्घ्यं कोष्ठं मुखेऽमुखे  १३८

कर्णे लाङ्गलकुड्यं वा परितः कुड्यमेव वा
विवृतं संवृतं वाऽपि स्तम्भं तत्रैव योजयेत्  १३९

सर्वावयवसंयुक्तं मङ्गलाख्यं तु मण्डपम्

अष्टावेतानि चोक्तानि देवद्विजमहीभृताम्  १४०

पूर्वोक्तचतुरश्रात्तु भक्त्यैकया विवर्धनात्
यावद् द्विगुणमायामं तावद् दैर्घ्यं प्रयोजयेत्  १४१

स्तम्भ कुडयादिकं सर्वमलङ्कारं च तत्ततः
यथारुचि यथाशोभं तथा कुर्याद् विचक्षणः  १४२

अष्टावायतयुक्तानि वक्ष्यन्ते वैश्यशूद्रयोः
द्विभक्तिविस्तृतं चैव विस्तारद्विगुणायतम्  १४३

त्रिःपञ्चाङ्घ्रिसमायुक्तं द्व्यंशैकं मुखभद्रकम्
पार्श्वे सोपानसंयुक्तं नासिकाख्यैरलङ्कृतम्  १४४

इष्टदिङ्मुखसंयुक्तं मार्गाख्यं मरडपं मतम्
त्रिभक्तिविस्तृतं तस्य विस्तारद्विगुणायतम्  १४५

चतुःसप्ताङ्घ्रिसंयुक्तं भक्त्या वारं तु तन्मुखे
द्विभक्तिविस्तृतं भक्त्या निर्गमं मुखभद्रकम्  १४६

युक्त्या नास्यङ्घ्रिसंयुक्तं सौभद्रं तन्मनोहरम्
चतुर्भक्त्या विशालं तु तस्माद् द्व्यंशाधिकायतम्  १४७

द्विचतुर्विस्तृतायामं कूटं मध्ये तु वाङ्गणम्
द्वात्रिंशाङ्घ्रिसमायुक्तं भक्त्या तन्मुखभद्रकम्  १४८

युक्त्या नास्यङ्घ्रिसंयुक्तं सुन्दराख्यं तु मरडपम्
पञ्चभक्त्या विशालं तु तस्माद् वेदांशमायतम्  १४९

द्विभक्तिविस्तृतं त्र्यंशदैर्घ्यं पार्श्वेऽङ्कणद्वयम्
षट्पञ्चाशद्भवेत् पादं वारमेकेन तन्मुखे  १५०

त्रिभक्तिविस्तृतं चैकभक्त्या तन्मुखभद्रकम्
प्रमुखे तस्य सोपानं सर्वतः कुड्यसंयुतम् १५१

युक्त्या नास्यङ्गसंयुक्तं साधारणमिति स्मृतम्
षड्भक्तिविस्तृतं तस्मात् त्रिभक्त्याधिकमायतम् १५२

द्विपञ्चभाग विस्तारायामं मध्ये सभोदयम्
परितो मण्डपं द्व्यंशं वारं भक्त्या तु तन्मुखे १५३

पूर्ववन्मुखभद्रं तु नासिकाख्यैरलङ्कृतम्
षष्ट्यङ्घ्रिकसमायुक्तं सर्वावयवसंयुतम् १५४

नाम्ना सौख्यमिति प्रोक्तं सर्वेषां तु सनातनम्
सप्तभक्त्या विशालं तु तस्माद् वेदांशमायतम् १५५

त्रिभागचतुरश्रं तु मध्ये कूटं तु वाङ्गणम्
तद्बाह्ये भागमानेन परितोऽलिन्द्रमिष्यते १५६

द्विपञ्चविस्तृतायामं पार्श्वयोरङ्गणद्वयम्
बाह्ये मण्डपमेकांशं परितः कल्पयेद् बुधः १५७

त्रिभक्त्यैकेन विस्तारनिर्गमं मुखभद्रकम्
चतुराशीतिकं पादमाद्यङ्गे प्रविधीयते १५८

प्रमुखे वारमेकांशं नानावयवशोभितम्
सर्वालङ्कारसंयुक्तमेत दीश्वरकान्तकम् १५९

अष्टभक्त्या विशालं तु तस्मात् पूर्ववदायतम्
द्विभक्ति चतुरश्रं तु मध्ये कूटं तु वाङ्गणम् १६०

तद्बाह्ये भागमानेन परितोऽलिन्द्रमिष्यते

पूर्ववत् पार्श्वयोः कूटं द्व्यंशेनाधिकमायतम् १६१

द्विभक्त्या मण्डपं बाह्ये परितः कल्पयेद् बुधः
चतुर्द्विभक्तिविस्तारनिर्गमं मुखभद्रकम् १६२

दशाधिकशतस्तम्भमाद्यङ्गे प्रविधीयते
सर्वालंकारसंयुक्तं श्रीभद्रं सर्वयोग्यकम् १६३

नवभक्त्या विशालं तु तस्मात् पूर्ववदायतम्
त्रिभक्तिचतुरश्रं तु मध्ये कूटं तु वाङ्गणम् १६४

तद्बाह्ये भागमानेन परितोऽलिन्द्रमिष्यते
द्विपञ्चभक्ति विस्तारदैर्घ्यं पार्श्वेऽङ्गणद्वयम् १६५

परितो मण्डपं द्व्यंशं तद्बाह्ये योजयेद्बुधः
पञ्चद्व्यंश विशालायामेन भद्रं मुखेऽमुखे १६६

त्र्यंशैकविपुलं दैर्घ्यं पार्श्वयोर्भद्रकद्वयम्
कर्णे लाङ्गलवत् कुड्यं विवृतस्तम्भसंयुतम् १६७

साष्टाविंशच्छतं पादमाद्यङ्गे प्रविधीयते
यथायुक्ति यथायोगं तथा युञ्जीत बुद्धिमान् १६८

सर्वतोभद्रकं नाम्ना सर्वालङ्कारसंयुतम्
एतान्यदि सुरादीनां योजयेत् तु विचक्षणः १६९

मण्डपानां तु विस्तारादायामं प्रविधीयते
जातिरूपं तु पूर्वोक्तं छन्दमेकं द्विभक्तिकम् १७०

विकल्पं त्र्यंशकं प्रोक्तमाभासं चतुरश्रकम्
दण्डकं स्वस्तिभद्रं च पद्मं क्रकर्भद्रकम् १७१

षरामुखं लाङ्गलं मौलिं जातिनामानुसारतः
प्रपामराडपजातिस्तु युक्तितः पादसंयुता १७२

गृहविन्यासरङ्गाङ्गं तदुक्तं गृहमराडपम्
प्रासादगर्भनालीवत् सालिन्द्राङ्गविशेषतः १७३

अधिष्ठानादिवर्गाढ्यं प्रासादाकारमराडपम्
प्रासादगृहसाङ्गाङ्गं गृहप्रासादमराडपम् १७४

मराडपोपरि भूमिश्चेन्मालिकामराडपं मतम्
इष्टकाभिः शिलाभिर्वा दारुभिर्दन्तलोहकैः १७५

सर्वत्र द्रव्यजातीनां मिश्रं मिश्रं विशेषितम् १७५-२

सायतं तु चतुरश्रकं जलक्रीडयान्वितमथापि मराडपम्
एकभौमकमनेकभौमकं योजनीयमवनीपतीच्छया १७६-२

संवृतं विवृतमङ्घ्रिभित्तिकं दिन्नु दिन्नु गतभद्ररूपकम्
मध्यरङ्गसहितं तु वाङ्गणं स्तम्भभित्तिकमुपर्युपर्यपि १७७-२

गुह्यवारणपराधिरोहणं द्वारि तत्र बहुयन्त्रकल्पकम्
वारिगर्भगजभूतहंसकं व्यालसिंहकपिसालभञ्जिकम् १७८-२

हर्म्यमराडपसभाभशीर्षकं कूटनीडगजतुराडकोष्ठकम्
तोरणादिबहुजालकैर्युतं नासिकादिभिरलङ्कृतं पुनः १७९-२

मराडपस्य पुरतोऽथ मध्यमे वा जलाशयमनेकयन्त्रकम्
इष्टकाभिरुपलैरलङ्कृतं सावगूढमपगूढवारिणाम् १८०-२

एवं भूपानां जलक्रीडनार्थं प्रोक्तं यत्तन्मराडपं रम्यदेशे
सालङ्कारं सर्वचित्रैर्विचित्रं स्त्रीसौभाग्यारोग्यभोग्यप्रदायि १८१-२

खदिरः खादिरो वह्निर्निम्बः सालः सिलिन्द्रकः पिशितः
तिन्दुकमथ राजादनहोममधूकास्तु पादपादपकाः १८२-२

एते देवद्विजनृपयोग्याः स्युः सर्वकर्मसु वै
स्तम्भाकृतयः सर्वे प्रोक्ताः पूर्वोदितास्तेषाम् १८३-२

पिशितस्तिन्दुकवृक्षो निम्बो राजादनो मधूकश्च
सिलिन्द्रः स्तम्भरुजा वैश्यानां चापि शूद्राणाम् १८४-२

वृत्तं वा चतुरश्रं वाष्टाश्रं षोडशाश्रं च
स्तम्भाकृतयः प्रोक्तास्त्वक्साराः सर्वयोग्याः स्युः १८५-२

तालं च नालिकेरं क्रमुकं वेणुश्च केतकी चैव
इष्टशिलाभिर्वा वृक्षैर्देव द्विजमहीपानाम् १८६-२

आश्रमिणामप्युदितान्यावासानि हि सर्वाणि
नैव शिलाभिर्वणिजां शूद्राणां वासके योग्यम् १८७-२

प्रासादाभिमुखे यान्यवरस्य श्रेष्ठमण्डपानि च वै
तानि विमानाद्यङ्गस्तम्भोत्तरवाजनानि सदृशानि १८८-२

अथ मुनिवसुनन्दांशैर्धर्मांकांशहीनानि
पूर्वोदितमानानि हि सर्वाण्यङ्गानि वा विधेयानि १८९-२

आख्यातं मण्डपानां तान्येवोक्तानि दिक्प्रमाणं च
पञ्चचतुस्त्रिद्विगुणस्तम्भव्यासेन भित्तिविष्कम्भम् १९०-२

दारुस्तम्भव्यासात् पादोनं वा त्रिभागमर्धोनम्
कुड्यस्तम्भविशालं तेन विशालेन वा कुड्यम् १९१-२

मध्याङ्गणस्य दिशि दक्षिणतोऽङ्घ्रिमूले

द्वारस्य दक्षिणयुते तलिपे तु केचित्
कोणे द्वितीय चरणान्वितके त्रिगर्भ-
स्थानं वदन्ति मुनयः खलु मण्डपानाम् १९२-२

उक्तव्यासायामभागादलिन्द्रं पूर्वेऽपूर्वे वाऽथ भक्त्या समन्तात्
भक्त्या वाध्यर्धः समन्तात् तु कुर्याद्देवानामुर्वीसुरोर्वीश्वराणाम् १९३-२

प्रासादाङ्गं मालिकाङ्गं यथावत्कुर्यात् कुडयं मूलकुडयोपरिष्टात्
पादं पादानामुपर्येव योज्यमेकद्वित्रीण्यत्र भौमानि युक्त्या १९४-२

तत्तद्विस्तारायतांर्विधिज्ञैस्तेषां मानं पादबाह्ये तु केचित्
केचिद् भित्तेर्मध्यमं तद्वदन्ति शालाकारं वा सभाशीर्षकाङ्गम् १९५-२

यत्तत् कुर्यान्मण्डपं वासयोग्यम् १९६

एकद्वित्रिचतुर्मुखानि च मुखे भद्राण्यभद्राणि का-
न्यूर्ध्वे कूटयुतानि मध्यकपदे रङ्गाङ्गणाढयानि वै
सर्वाण्यायतमण्डपानि चतुरश्राभाणि वेदद्विज-
क्षोणीशायतने मतानि च विशां शूद्रेषु दीर्घं मतम् १९७

नवानां हि सभानां तु लक्षणं वक्ष्यतेऽधुना
आद्यं मल्लवसन्तं तत्परं पञ्चवसन्तकम् १९८

एकवसन्तकं चैव सर्वतोभद्रकं तथा
पार्वतं कूर्मकं चैव माहेन्द्रं सोमवृत्तकम् १९९

शुकविमानकं चैव श्रीप्रतिष्ठितमेव च
न वै ताः सायताः पञ्चसभः शेषा युगाश्रकाः २००

एकद्वित्रिचतुर्भागा व्यासा आद्या नृदेवयोः
व्यासायाममलङ्कारं स्तम्भानां भित्तिमानकम् २०१

प्राग्वत् सर्वमलङ्कारं दरिडकान्तविमानवत्
लुपाक्रियाक्रमं सर्वं यथा शिखरलक्षरो २०२

कर्णरश्मियुता कूटसंज्ञा वेदाश्रका सभा
वलक्षितस्वस्तिहीना कर्णाः कूटे च कोष्ठके २०३

एकभक्त्या चतुःस्तम्भा लुपाकोटयेककूटकम्
अष्टपुच्छवलक्षं तु नाम्ना मल्लवसन्तकम् २०४

द्विभक्ति चतुरं चाष्टस्तम्भदीर्घलुपान्वितम्
वसुस्वस्ति वलक्षं तु मूलकूटं तु मध्यकम् २०५

चतुष्कर्णे चतुष्कूटा संज्ञा पञ्चवसन्तकम्
त्रिभक्तिचतुरश्रं तु द्वादशस्तम्भसंयुतम् २०६

द्विरष्टस्वस्ति पुच्छं तु सत्रयोदशकूटकम्
त्रिरष्टकवलक्षं तु स्यान्नाम्नैकवसन्तकम् २०७

युगभक्तियुगाश्रं तु द्विरष्टाङ्घ्रिबहिस्ततः
अन्तः स्तम्भकलार्धं तु कलार्धं प्रांशुरश्मयः २०८

अष्टद्विगुणकूटं तु त्रिरष्टस्वस्तिपुच्छकम्
षडष्टैर्ववलक्षं तु मूलकूटमथैककम् २०९

सर्वतोभद्रकं नाम्ना चतस्त्रश्चतुरश्रकम्
आयताश्रं चतुष्पञ्चभक्त्या पार्वतकूर्मकम् २१०

अष्टादश दशाङ्घ्रि स्याद् बाह्येऽबाह्येऽष्टरश्मयः
द्विरष्टसप्तकूटानि षड्द्विसप्तबहिर्बहिः २११

चतुष्षष्टि वलक्षानि चतुष्कोष्ठद्विरष्टकम्
चतुष्षड् भक्तिविस्तारं दैर्घ्यं विंशतिपादकम् २१२

अन्तर्द्वादशपादं स्यादन्तःकूटं तथाष्टकम्
बहिर्द्विरष्टकूटं स्याद् षोडश प्रांशुरश्मयः २१३

त्रिरष्टस्वस्तिकं चैव मूलकूटत्रिकं भवेत्
साशीतिकवलन्नं तु नवत्रिंशतिकूटकम् २१४

अन्तराङ्घ्रिविहीनं तु भक्त्या तत्रैव योजयेत्
नाम्ना माहेन्द्रकं प्रोक्तं राज्ञां प्राज्ञैर्मुनीश्वरैः २१५

व्यासायाम्यं चतुःसप्तभक्त्यान्तर्मनुपादकम्
बाह्ये द्वाविंशतिस्तम्भं त्रिरष्टं स्वस्ति पुच्छकम् २१६

षोडश प्रांशु रश्मिः स्याद् नवति षड्वलन्नकम्
मूलान्तर्बाह्यकूटानि चतुर्दशनवद्वयम् २१७

चतस्त्रः कोटयः कर्णधारासप्तकविग्रहाः
तदन्तर्द्धिनकं सोमवृत्तं नाम्ना समीरितम् २१८

पञ्चाष्टभक्तिविस्तारं दैर्ध्यं षड्विंशदङ्घ्रिकम्
अष्टादशाङ्घ्रिकं चान्तश्चतुष्कोटिसमन्वितम् २१९

द्वात्रिंशत् स्वस्तिकं चैव द्विसप्तति वलन्नकम्
चतुष्कूटयुतं मर्ध्नि द्विरष्ट प्रांशुरश्मयः २२०

अन्तर्बहिस्तु कूटानि त्रिरष्टैकादशद्वयम्
कर्णधाराष्टसंयुक्तं नाम्ना शुकविमानकम् २२१

पञ्चभक्त्यां विशालं तु नवभक्त्या तदायतम्
अष्टविंशति गात्राणि द्वात्रिंशत् स्वस्तिपुच्छकम् २२२

अन्तर्विंशतिकं स्तम्भं मध्यरश्मि तथैव च

पञ्चकूटयुतं मूर्ध्नि चतुष्कोटिसमन्वितम्  २२३

षष्ट्युत्तरशतं तत्र वलन्वं प्रविधीयते
द्विपञ्चांशं तु कूटानि नाम्नैतच्छ्रीप्रतिष्ठितम्  २२४

तदेव व्यासायामे तु भक्तित्रयविवर्धनात्
चतुश्शालायताश्राभा द्विषड्द्विरष्टपादकाः  २२५

अन्तर्बहिस्तु भक्त्या च वारं शाला द्विभक्तिका
चतुर्द्विसप्ततिस्तम्भमन्तर्बाह्ये तु कीर्तितम्  २२६

प्रासादवदलङ्कृत्वा चतुर्द्वारद्विचूलिकम्
भूपतेः श्रीप्रतिष्ठा स्यात् सभेयं श्रीप्रतिष्ठितम्  २२७

एकैकभागवृद्ध्या तु भवत्युक्तेतरा सभा
छन्दं विकल्पमाभासं तत्तन्नाम्ना विधीयते  २२८

स्तम्भरश्मिवलन्वं च कूटं युक्त्या प्रयोजयेत्
यथारुचि यथाशोभं व्यासायामे तु भक्तयः  २२९

प्रांशुरश्मियुतं कूटं कूटं वा चतुरश्रकम्
दरिडकानिर्गमसमो पूर्वपादोत्तरोद्गमः  २३०

तुलाश्रप्रस्तरांशेन चूलिकाभागलम्बिकम्
ऋृजु वा स्वस्तिकं ज्ञेयं वलन्दयाय प्रवेशिता  २३१

शिखावर्गं तथा सर्वे निष्कूटं च कचग्रहा
चूलिकाद्वयमध्यस्था नाम्ना स्याद्वर्णपट्टिका  २३२

वलयं त्रिगुणं व्यासाद् बाहुल्या लुपया समा
लुपापार्श्वद्वयारूढा वलयप्रोक्तनालिका  २३३

प्रतिचूलिकविन्यासा मुद्गरालम्बना स्थिरा
प्रतिलोमानुलोमाभ्यामङ्कणास्ते वलका २३४

द्विकोटिसङ्गमम खे वेशगर्भप्रदक्षिणे
प्रथमं स्तम्भनीय्या च शिल्पिकर्ता विधीयते २३५

पादबन्धमधिष्ठानं स्तम्भायामार्धमिष्यते
अनुक्तं यदि किञ्चित् तद्युक्त्या तत्र प्रयोजयेत् २३६

हलाङ्गवत्कुडय्युता सरङ्गका विरङ्गका वाप्यथ गर्भगेहका
सभेति सभ्यैरुदिता सनातना सभालयत्वादिह सभ्यमार्गणम् २३७

इति मयमते वस्तुशास्त्रे मण्डपसभाविधानो नाम पञ्चविंशोऽध्यायः

## अथ षड्विंशोऽध्यायः

शालाविधानम्

तैतलानां द्विजादीनां वर्णानां वासयोग्यकाः
एकद्वित्रिचतुस्सप्तदशशालाश्च षड्विधाः १

त्यक्ताजांशाः पुरोलिन्द्रसंयुक्ताः पिण्डभिन्नकाः
तासां हस्तैरयुग्मैश्च युग्मैर्विस्तारमायतम् २

उत्सेधं चाप्यलङ्कारं संक्षेपाद् वक्ष्यतेऽधुना
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात् ३

त्रयोविंशच्चतुर्विंशद्धस्तान्ता रुद्रसंख्यया
एकशाला विशालाश्च ते सर्वे परिकीर्तिताः ४

सप्ताष्टहस्तादारभ्य द्वौ द्वौ हस्तौ प्रवर्धयेत्
एकोनविंशद्धस्तान्तं विंशद्धस्तं तु सप्तधा ५

द्विशालायास्त्रिशालाया वैपुल्याः परिकीर्तिताः

विस्तारात् पादमाधिक्यमर्धाधिकमथापि वा ६

त्रिपादं द्विगुणायामं तस्मात् पादार्धकं त्रिपात्
त्रिगुणान्तप्रमाणं चैवायामाश्चाष्टधा स्मृताः ७

सर्वे दैर्घ्या सुराणां तु द्विगुणं तु नृणां मतम्
द्विगुणाद्यायताः सर्वे विहाराश्रमवासिनाम् ८

सर्वेषां सङ्गमोपेते द्विगुणाद्यायतं मतम्
विस्तारसममुत्सेधं सपादं सार्धमेव वा ९

त्रिपादं द्विगुणं चैव उत्सेधं पञ्चधा मतम्
शान्तिकं पौष्टिकं नैव जयदं धनमुद्भुतम् १०

तैतलानां द्विजादीनां पाषराडचाश्रमिणामपि
हस्त्यश्वरथयौधानां यागहोमादिशिल्पिनाम् ११

एकशाला प्रशस्ता स्यात् स्त्रीणां रूपोपजीविनाम्
दराडकं मौलिकं चैव स्वस्तिकं च चतुर्मुखम् १२

सामान्यं तैतलादीनां पूर्वोक्तानां चतुष्टयम्
एकादिबहुभूम्यन्तं खराडहर्म्यादिमरािडतम् १३

अर्पितानर्पितं चैव प्रासादवदलंकृतम्
पुरतः पार्श्वयोः पृष्ठेऽलिन्द्रं कुर्यात् समन्ततः १४

नराणां च सुराणां च पाषराडचाश्रमिणां तथा
पुरतो मराडपोपेतं पृष्ठे पार्श्वे तु भद्रकम् १५

मध्ये वासं तु देवानां पार्श्वे वासो भवेन्नृणाम्
प्रागवागपरोदीच्यां पृथक्शाला प्रधानिका १६

सर्वेषामपि जातीनां सामान्यमिति विद्यते
दक्षिणे पश्चिमे चैव शाला वैशेषिका नृणाम्  १७

प्रागुदक्प्रागवाक्प्रत्यगुदग्गेहे तु लाङ्गले
स्वामिनो मरणं स्याद्धि श्रियै याम्ये प्रतीच्यपि  १८

अवाक्प्रत्यगुदक् सम्पत् प्रागवागपरो जयः
दक्षिणे पश्चिमे हीनास्त्रिशालाः सर्वदोषकाः  १९

लाङ्गलं गणिकादीनां शूर्पमुग्रोपजीविनाम्
लाङ्गले चैव शूर्पे च पृथक्शालासु सर्वथा  २०

शालाविरहितस्थाने कुड्यद्वारं प्रयोजयेत्
एकसन्धि द्विशालायां त्रिशालायां द्विसन्धिकम्  २१

उक्तानां दण्डकादीनां विन्यासं च वदाम्यहम्
विस्तारं तु त्रिधा कृत्वा चतुर्भागं तदायतम्  २२

द्विभागं गृहविस्तारं वारमेकांशमग्रतः
आस्यं तत्खण्डदण्डाभं वासं सर्वजनार्हकम्  २३

एतद् दण्डकमित्युक्तं शालानां क्षुद्ररूपकम्
विस्तारे चतुरंशे तु षडंशाधिकमायतम्  २४

द्विभागं गृहविस्तारं द्व्यंशं चङ्क्रमणं भवेत्
शेषं पूर्ववदुद्दिष्टं दण्डकं तदुदीरितम्  २५

गृहायते नन्दविभागभाजिते शरांशकैर्दक्षिणभागमाधिकम्
अदक्षिणे बन्धपदं तदन्तरे विधीयतां द्वारमथैकशालके  २६

केचिद् द्वारं मध्यसूत्रस्य वामे चाहुः शिष्टं मानुषाणां निवासे

सर्वास्वेतास्वत्र शालासु शालाभागे कुर्यादायते द्वारमेकम्  २७

त्रिभागं गृहविस्तारं द्विगुणं तस्य दीर्घकम्
भागं चङ्क्रमणोपेतं मध्यमे सकभित्तिकम्  २८

कुल्याभद्वारसंयुक्तं शेषं पूर्ववदाचरेत्
वंशमूले तु वासं स्याद् वंशाग्रे रङ्गमीरितम्  २९

सर्वतः परितः कुड्यं रङ्गं पादसमन्वितम्
भागेन पुरतोऽलिन्द्रं पार्श्वयोः पृष्ठतस्तु वा  ३०

प्रासदवदलङ्कुर्याद् दण्डकं तदुदीरितम्
तदेव मध्यमे रङ्गं वासौ वंशाग्रमूलयोः  ३१

युक्त्यान्तः स्तम्भसंयुक्तं वंशद्वारं न योजयेत्
शेषं पूर्ववदुद्दिष्टं दण्डकं तदुदीरितम्  ३२

षडंशं विस्तृतं चैव द्वादशांशं तदायतम्
भागेन परितोऽलिन्द्रं शालाभागं द्विभागतः  ३३

तत्समं पुरतोऽलिन्द्रं युक्त्यान्तःस्तम्भसंयुतम्
पार्श्वयोर्द्वित्रिभागेन शालायामे द्विवासकौ  ३४

द्विचतुर्भागविस्तारायामं मध्ये तु रङ्गकम्
दण्डकं तदपि प्रोक्तं शेषं पूर्ववदाचरेत्  ३५

व्यासेऽग्निभूतपातालनन्दांशेंऽशद्विकत्रिभिः
चतुर्भिः पुरतोऽलिन्द्रं स्यादेकद्वित्रिशालके  ३६

एतत् सर्वं दण्डकं जातिरूपं देवानां भूतैतलानां नृपाणाम्

पाषण्डादीनां विशां शूद्रकाणां योधानां रूपाङ्गनानां प्रशस्तम्  ३७

एतदेव सभाकारशिरोयुक्तं तु मौलिकम्
तदेव काननोपेतं मौलिकं तदुदीरितम्  ३८

छन्दं पूर्वोदितानां तु संमतं नैव योषिताम्
तदेव पुरतोभद्रं चतुर्द्व्यंशेन निर्गमम्  ३९

वासं नेत्रत्रयोपेतं स्वस्तिकं तद् विकल्पकम्
देवभूसुरभूपेषु योग्यं नैवान्त्यजन्मनाम्  ४०

तदेव मुखभद्रं तु यथा तत् पृष्ठतो भवेत्
क्रकरीवंशमूलाग्रं चतुर्नेत्रसमन्वितम्  ४१

अधिष्ठानादिवर्गाढ्यं प्रासादवदलङ्कृतम्
नासिकातोरणाद्यङ्गैर्युक्तं वातायनादिभिः  ४२

चतुर्मुखमिदं नाम्ना आभासमिति कल्पितम्
देवद्विजनृपाणां च संमतं सम्पदां पदम्  ४३

एकादिपञ्चभूम्यन्तं दण्डकादिचतुष्टयम्
स्वामिचित्तवशान्यस्तस्थानविन्याससंयुतम्  ४४

हस्त्यश्ववृषभादीनां प्रत्येकं वासपङ्क्तिकम्
सद्विचूलित्रिचूल्यङ्गं सप्रग्रीवं सतल्पकम्  ४५

सपादं सार्धमुत्सेधं तत्समं वाऽभिधीयते
दण्डकं मौलिकं चैव यथेष्टदिशि वारणम्  ४६

चतुरश्रे द्विशाले तु धर्मभागविभाजिते
भागेन बाह्यतो वारं द्व्यंशं गेहविशालकम्  ४७

प्रमुखे वारमेकांशं मराडपं नवभागिकम्
तदावृत्त्यैकतोऽलिन्द्रं शेषं चङ्क्रमणं भवेत् ४८

मुखगेहं बहिर्वारं लाङ्गलाभं यथा तथा
मुखचङ्क्रमणाद्यन्तर्विन्यासं चतुरश्रकम् ४९

मध्यरङ्गसमायुक्तं मुख्यगेहं द्विवासकम्
बाह्यचङ्क्रमणाद् बाह्ये मुखभद्रं द्विभागतः ५०

चतुर्मुखसमायुक्तं द्विशालं तच्चतुर्मुखम्
तदेव पञ्चभागान्तमेकशालामुखायतम् ५१

द्वारं पूर्ववदुद्दिष्टं सर्वालङ्कारशोभितम्
मराडपं बाह्यतोऽलिन्द्रं सायतं प्रविधीयते ५२

नेत्रत्रयसमायुक्तं दीर्घ्यां सायतभद्रकम्
एतत् स्वस्तिकमित्युक्तं शेषं पूर्ववदाचरेत् ५३

तदेव द्विमुखोपेतं दराडवक्त्रमिति स्मृतम्
सावकाशाङ्गणोपेतं मराडपेन विना यदि ५४

शालाविरहितस्थाने कुडयद्वारं प्रयोजयेत्
एकानेकतलोपेतं कुर्याद् रूपोपजीविनाम् ५५

व्यासायामेऽष्टधर्मांशे त्रिशाले द्व्यंशमङ्गणम्
त्रिपार्श्वेलिन्द्रमेकांशं द्व्यंशं शालाविशालकम् ५६

त्यक्तमध्यमपादं तु द्व्यंशं तन्मुखभद्रकम्
षडाननसमोपेतं सप्रच्छन्नमजाङ्कणम् ५७

एकानेकतलोपेतं प्रासादवदलङ्कृतम्

द्वारादि पूर्ववन्मेरुकान्तं नामोग्रजीविनाम्  ५८

व्यासे पङ्क्त्यर्कभागे तु पार्श्वयोः पृष्ठतस्तु वा
वारमेकांशतः कुर्याद् द्व्यंशं गेहविशालकम्  ५९

प्रमुखे वारमेकांशं द्व्यंशं तन्मध्यमाङ्गणम्
परितो वारमेकांशं सप्रच्छन्नमथापि वा  ६०

तारद्व्यंशाधिकायामं चतुराननमण्डितम्
प्रमुखे तु चतुर्द्व्यंशं निर्गतद्वारभद्रकम्  ६१

पार्श्वयोर्वापरे मुख्यवासं स्याद् द्विललाटकम्
मौलिभद्रमिदं नाम्ना शेषं पूर्ववदाचरेत्  ६२

त्रिपञ्चषोडशारत्नितारा द्वौ द्वौ प्रवर्धयेत्
आचतुर्विंशतेर्व्यासः पञ्चधोक्तस्त्रिशालके  ६३

नवपङ्क्ति करादेवं द्विद्विहस्तविवर्धनात्
आपञ्चोत्तरषष्ट्यन्तं षट्षष्ट्यन्तं तु विस्तृतम्  ६४

चतुःशालाविशालाः स्युर्नवविंशतिसंख्यया
आद्यद्विसप्तमानं तु संवृताङ्गणकान्वितम्  ६५

विवृताङ्गणकं शेषं कुर्याद् यत्र यथोचितम्
आद्यं तु सर्वतोभद्रं द्वितीयं वर्धमानकम्  ६६

तृतीयं स्वस्तिकं चैव नन्द्यावर्तं चतुर्थकम्
पञ्चमं रुचकं विद्याच्छालानामभिधानकम्  ६७

तत्तदात्तविशालेन बीजं स्याच्चतुरश्रकम्
आत्तव्यासाद् द्विहस्तेनाधिक्यजात्यायतं मतम्  ६८

चतुर्हस्ताधिकं छन्दं विकल्पं षट्कराधिकम्
आभासमष्टहस्तेनाछिक्यं दैर्घ्यमिति स्मृतम् ६९

अथ वैशेषिकायाममात्तांशेन विधीयते
आत्तव्यासांशके जातिर्द्विभागेनाधिकायतम् ७०

चतुरंशाधिकं बीजाद् दीर्घं छन्दमिति स्मृतम्
षडंशदीर्घं विपुलाद् विकल्पमिति कथ्यते ७१

अष्टभागाधिकं व्यासादाभासं स्यात् तदायतम्
षडंशेन विशाले तु नेष्टमाभासदैर्घ्यकम् ७२

सर्वतोभद्रविन्यासं संक्षेपाद् वक्ष्यतेऽधुना
वासव्यासेऽष्टभागे तु द्विभागं मध्यमाङ्गणम् ७३

तदर्धं परितो मार्गं द्विभागं गेहविस्तृतम्
चतुष्कर्णे सभास्थानं सभामध्ये तु वारकम् ७४

पूर्वापरगृहे वाऽपि स्वाम्यावासं प्रशस्यते
सर्वतः कुड्यसंयुक्तं कुल्याभद्वारसंयुतम् ७५

बहिर्जालककुड्यं स्यादन्तर्निर्वृत्तपादकम्
पक्षशालांशके द्वारं मुखं पूर्वेऽपरत्र वा ७६

जालकं च कवाटं च बाह्येऽबाह्ये तथैव च
क्रकरीवंशशाला ग्रमष्टास्यं भद्रसंयुतम् ७७

चतुर्दिग्भद्रसंयुक्तमेकैकार्धसभामुखम्
अन्तर्भद्रसभाकर्णे शङ्खसङ्गलुपान्वितम् ७८

मुखपट्टिकयोपेतमर्धकोटिसमन्वितम्

परितो दण्डिकावारं शिखरे नीव्रपट्टिका  ७९

प्रस्तरं नासिकायुक्तमन्तरप्रस्तरान्वितम्
समकायं समद्वारं समवंशं तु कारयेत्  ८०

विपरीतमनर्थाय भवेदेव न संशयः
मुक्तमुक्ततलं तत्र मण्डपक्रिययान्वितम्  ८१

एकानेकतलोपेतं प्रासादवदलंकृतम्
देवद्विजनृपाणां च वासयोग्यं सनातनम्  ८२

सर्वासामपि शालानामेतत् सामान्यमीरितम्
हस्तच्छेदप्रवृद्ध्या वा हान्या पूर्णं यथा कुरु  ८३

कर्करीकर्णवक्त्रान्ता शालावासचतुष्टया
अष्टास्योर्ध्वतलग्रीवा सस्थूपिसमवंशका  ८४

भद्रोर्ध्वमुखकूटं स्यादन्तर्द्वारं बहिर्मुखम्
एतत्तु सर्वतोभद्रं राज्ञामावासयोग्यकम्  ८५

वासव्यासेऽर्कभागे तु द्विभागं मध्यमाङ्गणम्
परितो मार्गमेकांशमन्तर्वारमथांशकम्  ८६

शालाव्यासं द्विभागेन बाह्यवारं तदर्धकम्
एतत्तु सर्वतोभद्रमलङ्कारादि पूर्ववत्  ८७

व्यासे द्विसप्तभागे तु द्विभागं मध्यमाङ्गणम्
परितो मार्गमेकांशं द्व्यंशं शालाविशालकम्  ८८

तदर्धं बाह्यवारं तु पृथुवारं द्विभागतः
चतुष्टयानां शालानां शिखरं तु सभाकृति  ८९

मध्ये नासिसमायुक्तं भद्रप्रभृति पूर्ववत्
सर्वासामपि शालानां त्यजेन्मध्यस्थपादकम् ९०

त्रितलादितलोपेतं खण्डहर्म्यादिमण्डितम्
एतत्तु सर्वतोभद्रं देवद्विजमहीभृताम् ९१

व्यासे द्विरष्टभागे तु चतुरंशमथाङ्गणम्
पूर्ववद् योजयेच्छेषं प्रहीणशिखराकृति ९२

नासिकातोरणाद्यङ्गैर्जालकैश्च समन्वितम्
त्रितलादितलोपेतं प्रासादवदलङ्कृतम् ९३

तले तले तु सोपानं मध्ये मध्ये तु मण्डपम्
विवृतं वाङ्गणं सर्वं युक्त्यानुक्तं प्रयोजयेत् ९४

एतत्तु सर्वतोभद्रं नृपाणामधिवासकम्
अष्टादशांशके व्यासे द्विभागं मध्यमाङ्गणम् ९५

परितो मार्गमेकांशमन्तर्वारमथांशकम्
शालाव्यासं द्विभागेन बाह्यवारं तदर्धकम् ९६

द्विभागं पृथुवारं स्याद् बाह्यवारमथांशकम्
शालाकारं सभाकारं यथा वा शिखरं तु तत् ९७

त्रितलादितलोपेतं खण्डहर्म्यादिमण्डितम्
पूर्ववद् योजयेच्छेषं यथायुक्ति यथारुचि ९८

स्वामिचित्तवशान्यस्तस्थानविन्याससंयुतम्
अन्यत् प्रासादवत् सर्वमलङ्कुर्याद् विचक्षणः ९९

एतत्तु सर्वतोभद्रं नृपेशभवनं स्मृतम् ९९-२

शालाजातिस्तच्छिरो युग् विमानं मुण्डाकारं शीर्षकं हर्म्यमेतत्
नानाकाराङ्गान्वितानेकभूमा मालाबद्धा स्यात् तु सा मालिकाख्या
१००

व्यासे षड्वस्वंशकेऽष्टाभिरंशार्कैर्मन्वंशैर्दैर्घ्यकं तद्वदंशे
एकद्व्यंशं मुख्यवासस्य वारं दैर्घ्याष्टांशैर्वारमेकं च सार्धम् १०१

वर्धमानस्य विन्यासं वक्ष्ये संक्षेपतः क्रमात् १०२

व्यासे षडंशके तत्र द्व्यंशं शालाविशालकम्
द्विभागमङ्गणं बाह्ये सर्वतः कुड्यसंयुतम् १०३

प्रमुखे मुख्यवासस्य भागं चङ्क्रमणं भवेत्
मध्यभित्तिसमायुक्तं कुल्याभद्वारसंयुतम् १०४

अपरे दीर्घशाला स्याद् द्विनेत्रोत्तुङ्गसंयुता
ईषन्निम्नोन्नता प्राचीशाला दीर्घाननान्विता १०५

पक्षके द्वे तु शाले तु वंशनिम्ने विवक्त्रके
एकैकदिशि निष्क्रान्तं द्विभागं मध्यवारणम् १०६

ह्रस्वपादसमायुक्तं यथालङ्कारकं तु यत्
शङ्खावर्तं तु सोपानं कर्णे द्व्यंशेन योजयेत् १०७

नासिकातोरणस्तम्भजालकादिविराजितम्
प्रासादवदलङ्कुर्यादनुक्तं चात्र पूर्ववत् १०८

एकद्वित्रितलोपेतं नोदग्द्वारं महीभृताम्
तदेवांशेन वारं तु विवृतस्तम्भभित्तिकम् १०९

मुख्यगेहार्धदाक्षिणये मूलवंशान्ततोन्नतम्

यथेष्टदिशि भद्राङ्गं यथेष्टदिशि वांसकम्  ११०

दण्डिकावारसंयुक्तं प्रासादवदलङ्कृतम्
द्वारतोरणनासीभिस्तथा वेदिकजालकैः  १११

यथारुचि यथाशोभं तथा कुर्याद् विचक्षणः
एतत्तु वर्धमानं स्याच्चतुर्णामपि शंसितम्  ११२

व्यासे दशांशके तत्र द्विभागमङ्गणं भवेत्
तद्बहिर्वारमेकांशं शालाव्यासं द्विभागिकम्  ११३

तदर्धं तु बहिर्वारिं द्वारं भद्रसमन्वितम्
कूटकोष्ठादिसर्वाङ्गं यथायुक्ति यथारुचि  ११४

एतत्तु वर्धमानं स्याच्चतुर्णामपि शंसितम्
अथवा तद्बहिर्वारं द्व्यंशं व्यासे दशांशके  ११५

मुक्तमुक्ततलं तत्र मण्डपक्रिययान्वितम्
यथोचितमलङ्कारमुपर्युपरि तत्क्रमात्  ११६

मुखभद्रं विना तत्र शेषं प्रागुक्तवन्नयेत्
समं त्रिपादमर्धं वा मुखमण्डपमिष्यते  ११७

शेषं प्रागुक्तवन्नेयं विप्रादीनां प्रशंसितम्
त्रिचतुष्पञ्चभौमं स्याद् वर्धमानं समोहरम्  ११८

द्वादशांशे विशाले तु द्विभागं मध्यमाङ्गणम्
शालाव्यासं द्विभागं तद्बाह्यालिन्द्रं द्विभागतः  ११९

तद्बहिर्वारमेकांशं स्तम्भं कुड्यं यथोचितम्
पार्श्वयोस्तद्बहिर्द्व्यंशैकांशविस्तारनिर्गमा  १२०

सवारमुखपट्टयङ्गनेत्रशालाविनिर्गता
पुरतः पार्श्वयोर्नेत्रशालेऽलिन्द्रात्तु पूर्ववत्  १२१

तयोर्मध्ये चतुर्द्व्यंशे द्वितलेवाःस्थलान्वितम्
वारं स्यात् त्रितले तत्र तत्र शाला चतुःस्थले  १२२

अपरे कर्णकूटे द्वे कर्तव्ये पञ्चभूमिके
तयोर्मध्ये चतुर्द्व्यंशे षट्तलेऽर्धसभामुखम्  १२३

पार्श्वयोर्नेत्रकूटे द्वे मुख्यधाम्नस्तु षट्तले
पुरतः कर्णकूटे द्वे सोपानं स्यात् तदन्तरे  १२४

तत्पुरः कर्णकूटे द्वे कर्तव्ये तु चतुःस्थले
शाला पञ्चतले कार्या दैर्घ्ये तत्रैव पञ्जरे  १२५

द्विभागविपुलायामे कर्तव्ये पार्श्वयोस्तुते
अङ्गणं मण्डपं चोर्ध्वे तदूर्ध्वे स्थलपादयुक्  १२६

द्वारनेत्रसमायुक्तं वामे सोपानसंयुतम्
मुखचङ्क्रमणे गुह्यसोपान स्यात् तले तले  १२७

पृष्ठेऽष्टद्व्यंशविस्तारनिर्गमं भद्रशोभितम्
तदंशे पार्श्वयोर्वक्त्रे वारं स्यात् त्रितलान्वितम्  १२८

द्व्यंशैकांशैकविस्तारनिर्गमा पञ्चभूमिके
सवारमुखपट्टयङ्गपृष्ठशालाविनिर्गता  १२९

पार्श्वयोर्द्विद्विभागेन कूटौ द्वौ तु चतुःस्थले
परितो मण्डपं तत्र वासव्याससमन्वितम्  १३०

द्वितलोपरि भद्राङ्गी शाला नेत्रसमन्विता

वास्तूनां तु चतुर्मध्ये चतुःसूत्रं प्रसारयेत्  १३१

तत्तत्सूत्रस्य वामे तु द्वारं विधिवदाचरेत्  १३१-२

मध्ये स्तम्भं तु संस्थाप्य पार्श्वे द्वारयुतं तु तत्
कर्तव्यं विधिना तज्ज्ञैः कम्पद्वारं तदुच्यते  १३२

प्रासादवदलङ्कुर्यात् स्तम्भाद्यङ्गं तले तले
सप्तभौमं नृपेशस्य मन्दिरं वर्धमानकम्  १३३

चतुर्दशांशके व्यासे द्विभागं मध्यमाङ्गणम्
परितो वारमेकांशं शालाव्यासं द्विभागिकम्  १३४

द्विभागं पृथुवारं स्यात् बाह्यवारं तदर्धकम्
ज्परितो दण्डिकावारं मुष्टिबन्धादिशोभितम्  १३५

चूलहर्म्यादिकं कुड्यं महावारमुपर्यपि
कूटकोष्ठादिसर्वाङ्गं युक्त्या तत्र प्रयोजयेत्  १३६

एतत्तु वर्धमानं स्यान्नोदग्द्वारं महीभृताम्
व्यासे द्विरष्टभागे तु द्विभागं मध्यमाङ्गणम्  १३७

तावत् स्याद् गृहविस्तारं परितः कुड्यसंयुतम्
द्विभागं पृथुवारं स्यादन्तःस्त्म्भं यथोचितम्  १३८

तद्वहिर्वारमेकांशं पृथुवारं द्विभागतः
स्तम्भं कुड्यं यथायुक्ति यथाशोभं तथाचरेत्  १३९

दण्डिकावारसंयुक्तं पार्श्वे पृष्ठे सभद्रकम्
पार्श्वयोर्नेत्रशाले द्वे द्वे महावारसंयुते  १४०

द्विद्विभागविनिष्क्रान्ते स्यातां ते मुखपट्टिके
पृष्ठवासं यथाशोभं यथाचित्रं विभागतः  १४१

यथारुचि यथाशोभं कूटकोष्ठं तले तले
द्वितले त्रितले वाऽपि गोपानारूढमञ्चकम्  १४२

शङ्खावर्तं तु सोपानं प्रमुखे कर्णकूटयोः
तले तले तु सोपानं मुखे चङ्क्रमणो भवेत्  १४३

पादं पादाश्रयं पादं यथाशोभं यथाबलम्
किञ्चिदाश्रयमेवं वानाश्रयं विपदो पदम्  १४४

वर्षस्थलं चूलहर्म्यं कर्तव्यं स्यात् तले तले
गोपानं च लुपाश्चैव वक्त्रस्तम्भं च नाटकम्  १४५

मुष्टिबन्धं च निर्यूहवलभी च कचग्रहम्
यत्र यत्रोचितं तत्र योजयेत् तद् विचक्षणः  १४६

सभा वा मण्डपाकारं मालिकाकारमेव वा
एतासामपि शालानामङ्गणं कारयेद् बुधः  १४७

मण्डपस्य तु मध्ये तु स्तम्भं नैव प्रयोजयेत्
मण्डपं पुरतस्तस्य वासव्याससमं तु वा  १४८

त्रिपादं वा तदर्धं वा युक्त्यान्तः स्तम्भसंयुतम्
एकद्वित्रितलोपेतं मालिकाभं यथा तथा  १४९

विवृतस्तम्भसंयुक्तं वासालिन्द्रान्वितं तु वा
अन्तः सोपानसंयुक्तमनुक्तं चात्र पूर्ववत्  १५०

त्रितलाद्यानवतलमेकादशतलं तु वा
एतत्तु वर्धमानं स्याद् भूपेन्द्राणां विशेषतः  १५१

नन्द्यावर्तस्य विन्यासमलङ्कारमथोच्यते

व्यासे षडंशके तत्र द्विभागं मध्यमाङ्गणम्  १५२

शालाव्यासं द्विभागं स्यात् तन्मानं तु चतुष्तयम्
बाह्यवारं च कुडयं च नन्द्यावर्तसमाकृति  १५३

दिश्यथैका न तद्द्वाशाला वाथ चतुष्टयम्
जालकं च कवाटं च बाह्येऽबाह्ये तथैव च  १५४

सर्वतः कुडयसंयुक्तं मुख्यगेहं कभित्तिभाक्
कुल्याभद्वारसंयुक्तं मुखचङ्कमणं भवेत्  १५५

अन्तर्विवृतपादं स्याद् बाह्ये कुडयावृतं तु तत्
चतुर्दिक्षु विनिष्क्रान्तमर्धकूटसमाकृतिः  १५६

दण्डिकावारसंयुक्तं प्रासादवदलङ्कृतम्  १५६-२

चतुर्णामुदितं वैश्यशूद्रयोः प्राग्दिगाननम्
तदेवांशावृतालिन्द्रं बहिर्द्वारं प्रशोभितम्  १५७

अधिष्ठानाङ्घ्रि कादीनि पूर्ववद् योजयेद् बुधः
एकद्वित्रितलोपेतः मुण्डप्रासादसंज्ञिकम्  १५८

चतुर्णामपि वर्णानां योजयेत् तद्विचक्षणः
व्यासे दशांशके तत्र द्विभागं मध्यमाङ्गणम्  १५९

परितो मार्गमेकांशं शालाव्यासं द्विभागतः
बाह्यतोऽलिन्द्रमेकांशं भद्रप्रभृति पूर्ववत्  १६०

यथायुक्ति यथाशोभं तथा हर्म्याङ्गमण्डितम्
द्विषडंशे विशाले तु द्विभागं मध्यमाङ्गणम्  १६१

द्व्यंशं शालाविशालं स्यान्मुखगेहं कभित्तिभाक्

पृथुवारं द्विभागेन तद्वाह्ये तु समन्ततः १६२

परितोऽलिन्द्रमेकांशं स्तम्भं कुडचं यथेष्टतः
सालिन्द्रं चूलहर्म्याङ्गं यथायुक्ति यथारुचि १६३

द्वारं च मुखभद्रं चाप्यधिष्ठानादि पूर्ववत्
चतुष्टयानां शालानां मध्यवंशोर्ध्वमस्तकम् १६४

पुरे पुरे भवेत् कूटं पञ्चशालाननान्वितम्
नन्द्यावर्ताकृतिश्चाथ यथायुक्तं चतुर्मुखम् १६५

ऊर्ध्वोर्ध्वमङ्गणं कुर्यात् पञ्चशालासमोपरि
सभा वा मण्डपं वाऽपि मालिका चाङ्गणक्रिया १६६

त्रितलादितलोपेतमूहप्रत्यूहसंयुतम्
द्विजानां च महीपानामेतत् प्रासादकं हि तत् १६७

चतुर्दशांशके व्यासे द्विभागं मध्यमाङ्गणम्
परितो मार्गमेकांशं द्विभागं गेहविस्तृतम् १६८

पृथुवारं द्विभागं स्याद् युक्त्यान्तः स्तम्भसंयुतम्
तद्बहिर्वारमेकांशं कुडचस्तम्भादिमण्डितम् १६९

चतुर्दिशाननोपेतं नन्द्यावर्तसमाकृति
ऊर्ध्वशालास्तथाष्टास्याश्चतुरास्या व्यवस्थिताः १७०

द्वादशास्यसमायुक्तमूर्ध्वाधस्ताद् विशेषतः
चतुर्दिक्षु सभद्राङ्गद्वारशालाकशोभितम् १७१

अनुक्तं हि यथा सर्वं पूर्ववत् कारयेद् बुधः
व्यासे द्विरष्टभागे तु द्विभागं मध्यमाङ्गणम् १७२

शालाव्यासं द्विभागेन पृथुवारं तु तत्समम्
तद् बहिर्वारमेकांशं तद्बहिर्वारमेकतः १७३

सालिन्द्रं चूलहर्म्याङ्गं यथायुक्ति यथारुचि
तस्योपरि गता शाला चतुष्कशिरसा सह १७४

त्रितलाद्या नवतलं भूपभूसुरयोग्यकम्
द्वाराणि भित्तयः सर्वे ह्युत्तराद्या ह्यनुक्रमात् १७५

प्रासादवदलङ्कुर्यान्नन्द्यावर्तं तु जालकम्
यथायुक्ति यथाशोभं तथा कुर्याद् विचक्षणः १७६

ऊहप्रत्यूहसर्वाङ्गैर्गेहालङ्कारमिष्यते
व्यासे षडंशके तत्र स्वस्तिके द्व्यंशमङ्गणम् १७७

तावच्छालाविशालं स्यात् कुल्याभद्वारसंयुतम्
पृष्ठे तु दीर्घकोष्ठं स्यात् पुरतः कोष्ठकं तथा १७८

पक्षके कर्करीशाला मुखपट्टिकयान्विता
विना पट्टिकया पृष्ठे कोष्ठके पृष्ठसंयुतम् १७९

दण्डकावारसंयुक्तं षण्नेत्रं भद्रसंयुतम्
अन्यत् प्रासादवत् सर्वमलङ्कुर्याद् विचक्षणः १८०

प्राङ्मुखं स्वस्तिकं वैश्यशूद्रयोः संमतं बुधैः
तदेवांशावृतालिन्द्रं खण्डहर्म्याभिमण्डितम् १८१

पूर्ववद् भद्रसंयुक्तमलङ्कारादि पूर्ववत्
द्विःषडंशेऽथ मन्वंशे षोडशांशे यथेष्टतः १८२

अङ्गणं च बहिर्वारं पृथुवारमलिन्द्रकम्

शालाव्यासं द्विभागेन सर्वतःह् परिकल्पयेत्  १८३

द्वारं च स्तम्भकुडय्ं च भद्रं युक्त्या प्रयोजयेत्
यथायुक्ति यथाशोभं तथा हर्म्याङ्गसंयुतम्  १८४

शालाकारं सभाकारं हर्म्याङ्गं वाऽथ शीर्षकम्
एतत् स्वस्तिकमित्युक्तमनुक्तं चात्र पूर्ववत्  १८५

निर्विष्टाः कोटिसंयुक्ताः कर्णे सोपानसंयुताः
रुचकाख्या विचित्राङ्गा नोदग्द्वाराःह् प्रकीर्तिताः  १८६

पाषण्डिनां द्विजादीनां सुराणां वासयोग्यकाः
चतुर्णामुदितं राज्ञां सर्वमुर्वीदिवौकसाम्  १८७

वैश्यानामुदितं सर्वं शूद्राणां सम्मतं बुधैः  १८७-२

उक्तव्यासेनान्विता दीर्घहीना
वेदाश्राभा स्ताः सुराणां द्विजानाम्
दानादीनां सर्वपाषण्डिकानां
चतुःशालाः संमताः सद्भिरेव  १८८

एतद् वदन्ति मुनयो विपुले नवांशे
वस्वंशके मुनिपदे रसभागिके तु
द्व्यंशं गृहस्य विपुलं त्वथ पञ्चभागे
शालाविशालमिह भागमिति क्रमेण  १८९

अष्टाष्टहस्तविसृतं द्विगुणायतं च

द्विद्वारि पङ्क्तिवदनं द्वयमङ्गणं च
षट्सन्धिकं भवनवत् परिमण्डनीयं
तत् सप्तवासमवनीसुरमन्दिरं स्यात्  १९०

व्यासे पञ्चांशे नवांशायतं स्यात्षड्भागे रुद्रांशकैः सप्तभागे
द्विःषड्भागैरष्टभागे नवांशे द्विःसप्तांशैः षोडशांशैस्तु दैर्घ्यम्  १९१

एवं पञ्चैवायतं सप्तशाले पूर्वोक्तव्यासांशके पङ्क्तिशाले
दैर्घ्यं सैकार्कैर्विकारैः ससप्तधर्मांशैर्विंशत्त्रयोविंशदंशैः  १९२

राज्ञामुदीरितमशीतिकरैर्विशाले दैर्घ्यं तु तत्त्रिगुणमर्कललाटयुक्तम्
त्रिद्वारि चाङ्गणगुणान्वितमष्टसन्धि द्विःपञ्चशालामथ हर्म्यमिव प्रयोज्यम्

वासत्र्यंशं सार्धभागं ह्यलिन्द्रं त्र्यंशैकांशं वा तदर्धं प्रवेशम्
बाह्येऽबाह्ये नालनीप्रं तदर्धं शालानां स्यादत्र सामान्यमेतत्  १९४

निरङ्गणं कर्णगतान्वितं बहुबहुप्रवेशं बहुचाननान्वितम्
अन्तर्बहिर्बक्रयुतं ह्यसीमकं वासं न सामान्यगताङ्गणान्वितम्  १९५

हस्तस्तम्भतुलादिकान् नरगृहे युञ्ज्यादयुग्मं यथा
युग्मायुग्मकसंख्यया सुरगृहे युञ्जीत हस्तादिज्कम्
मध्यद्वारमनिन्दितं सुरमहीदेवक्षितीशालये
शेषाणामुपमध्यमेव विहितं तत् संपदामास्पदम्  १९६

गर्भं कुर्यान्नेत्रके भित्तिभागे पादाधाराच्छ्वभ्रकाधः क्रमेण
मध्यस्य स्याद् वामभागे गृहे वा शालायां स्यान्मुख्यधामन्यवश्यम्

भित्तिव्यासेऽष्टांशके चातुरंशं बाह्येऽबाह्ये तत्त्रिभागं विहाय
मध्ये गर्भं योजनीयं सुराणां विप्रादीनां मन्दिरे निन्दतं तत्  १९८

वंशद्वारं नैव विप्रादिकानां वर्णानामावासके योजनीयम्
पाषण्ड्यादीनां मुनीनां गृहे तद्वंशद्वारं योजनीयं न दूष्यम्  १९९

आद्यमथात्तविशालं त्रिगुणायामं ततः प्रवृद्धिः स्यात्
व्यासद्विगुणैस्त्रयोविंशति यावत् तावत्तु सैकदशसंख्या  २००

पुरतो भद्रसमेतं कर्णसभाकोष्टनीडमिण्डतकम्
पृष्ठे वारयुतं वा द्विललाटं गर्भकूटसमम्  २०१

एकद्वित्रितलाढ्यं पुरतोऽपरतो विचित्रनास्यङ्गम्
एतद् विहारशालं प्रासादवदेव करणीयम्  २०२

सर्वासामपि वक्ष्ये पादायामं तु तस्य विष्कम्भम्
सार्धद्विहस्तमादि त्रिभिरथ षड्भिः कराग्रजद्धर्या तु  २०३

सार्धत्रिचतुर्हस्तावधिकं यावन्नवाङ्घ्रिकायामम्
व्यासं षडङ्गुलं स्यात्तस्मादर्धैकमात्रवृद्धया तु  २०४

दश वा चतुर्दशमात्रं यावन्नवधा विशालं स्यात्
पूर्वोदितमानं वा योज्यं युक्तिक्रमेण विद्वद्भिः  २०५

स्वव्यासकरं त्रिगुणं कृत्वा वसुभिर्हरेत् तु तच्छेषम्
ध्वजधूमसिंहश्वावृषखरगजवायसाश्च योनिगणाः  २०६

एषु ध्वजमृगवृषभेभाः शुभयुक्ता न शोभनास्त्वन्ये
दैर्घ्यं वसुगुणितं यत्तत् त्रिर्नवभिर्हरेत् तु तच्छेषम्  २०७

अश्वयुजादिकमृक्षं तद्दशतस्त्वेव राशयः प्रोक्ताः
आयामे वसुनवभिर्गुणिते यत् त्वर्कपङ्क्तिभिर्हासम्  २०८

शेषं धनमृणमुदितं क्रमशस्त्वृणाधिकायं तु शुभम्
नाहं नवगुणितं यत्त्रिशतिभिर्भाजनं तु तच्छेषम्  २०९

तिथिरपि सूर्यप्रमुखो वारः स्यात् तदृक्षसंयोगम्
अमृतवरसिद्धयोगैर्योज्यं नैवान्ययोगमेव स्यात्  २१०

यजमानजन्मनामर्क्षयुतं यद् वस्तु तादृशं तु शुभम्

एवं नृणामुदितममराणां चेच्छुभं यथा कर्तुम्  २११

सैकत्रिंशद्धस्तविस्तारकाद्यां द्वाभ्यां द्वाभ्यां वर्धयेत् तत्कराभ्याम्
शालाबाह्ये सैकषष्ट्यन्तमानाभीष्टायामा संमता स्यात् खलूरी  २१२

बहिरबहिरभीष्टा कुडयपादाङ्गशोभा
शिखरमपि लुपारूढान्वितं मराडपं वा
अमरनरविमानाद्यावृता सा खलूरी
भवनतलविहीनैकद्विभूमिप्रयुक्ता  २१३

प्रथमावरणे द्वितीयके वा परभागे सदनं तु योषिताम्
निर्ऋतौ सूतिगृहं च वर्चसः पवनादीन्दुषु वाङ्गणागृहम्  २१४

यमदिशि भोजनशाला सोमे धनसञ्चयावासम्
अग्नौ धान्यागारं खे पक्तिर्व्यञ्जनानि तत्रैव  २१५

आराधनगृहमीशे कूपं तत्रोदितौ स्नानम्
यस्मिन्यस्मिन्नुदितान्यन्यानि हि तत्र संप्रयोज्यानि  २१६

द्वाराणि च कुडयानि च युक्त्या तु स्वामिवाञ्छवशात्
अन्यच्छेषं सर्वं कुर्यादुक्तिक्रमेण दृढतरधीः  २१७

अपि च शिखिनि गोष्ठं नैर्ऋतेऽजाविकानां
पवनदिशि निवासं माहिषं चैशकोणे
भवति तुरगशाला नागशाला च तस्मिन्
दिशि च दिशि च सर्वे वाहना द्वारवामे  २१८

सामान्यं स्यादेतदुक्तं चतुर्णां वासे राज्ञां योजनीयं विशेषम्
त्रिप्राकरं च त्रिपङ्क्तिस्त्रिभोगं शेषाणां चाप्युक्तनीत्या त्रयाणाम्  २१९

एकद्वित्रीण्यत्र सालानि नृणां पञ्चत्रीण्येकादि देवालयेषु
यत्तत् प्रोक्तं धामनानेन पूर्वं तत्रैवायोज्यं विधिज्ञैर्नराणाम्  २२०

इति मयमते वस्तुशास्त्रे शालाविधानं नाम षड्विंशोऽध्यायः

## अथ सप्तविंशोऽध्यायः

वर्णानां गृहविन्यासलक्षणं वक्ष्यतेऽधुना
चतुर्दण्डात् समारभ्य द्विद्विहस्तविवर्धनात्  १

त्रिंशद्धस्तावधिर्यावदेकैकं गृहमानकम्
क्षुद्राणामष्टधा प्रोक्तं मध्यमानां विधीयते  २

अष्टदण्डात् समारभ्य द्विद्विदण्डविवर्धनात्
द्वात्रिंशद्दण्डपर्यन्तं गृहाणां मानमिष्यते  ३

अस्मादाशतदण्डान्तं दण्डाभ्यां वर्धयेत् क्रमात्
वाटभित्तेरिदं मानं तदभ्यन्तरतो गृहम्  ४

चतुरश्रं द्विजानां च नृपाणां च विशेषतः
अष्टषट्चतुरंशेन दैर्घ्यं स्यात् क्षत्रियादिषु  ५

हीनं षोडशहस्तेभ्यो गृहमानं न कारयेत्
नवाष्टसप्तषड्ढस्तैरुत्तुङ्गं तुङ्गमानतः  ६

त्रिचतुर्भागविस्तारा पादोनाग्रविशालका
छत्रशीर्षकतुल्याभा चन्द्रनासीविभूषिता  ७

चतुर्दिक्षु चतुर्द्वारोपेतातल्पसमायुता
द्वारगोपुरसंयुक्ता नानावयवशोभिता  ८

बहिष्ठात् परिखोपेता सर्वरक्षासमन्विता
वाटभित्ति प्रोक्ता गृहबाह्यसमावृता  ९

मृण्मया वा लुपारूढा तृणादिच्छादनान्विता
खलूरिका वा कर्तव्या वेदिकापादशोभिता  १०

गृहक्रिया हि द्विविधा भिन्नाभिन्नप्रकारतः
भिन्नं च पिराडभेदं च वक्ष्ये स्फुटतरं यथा ११

असन्धिकं भिन्नगृहं समन्धिकं ह्यभिन्नकं भिन्नगृहेषु तेषु वै
चतुर्गृहं दिक्षु गतं प्रधानकं विदिक्षु वा मराडपकं खलूरिका १२

स्याद् वाटभित्तेरबहिः पृथग् गृहं त्रयं द्विकं वैकमसम्पदां पदम्
तस्माच्चतुःशालमनिन्दितं परं सविस्तरं तस्य तु मानमुच्यते १३

नीचानां नीचमानं स्यात् श्रेष्ठानां श्रेष्ठमुच्यते
श्रेष्ठमानं निकृष्ठानां सर्वदा न प्रयुज्यते १४

क्वचिदिष्टं कनिष्ठानां यन्मानं श्रेष्ठजातिषु
अल्पत्वे वा महत्त्वे वा सीमासूत्रे विनिश्चिते १५

सायते चतुरश्रे वा चतुष्षष्ट्या विभाजिते
रज्जुवंशसिराषट्कचतुष्काष्टकसन्धिभिः १६

मर्मशूलं च यत्नेन वर्जयेद् वास्तुकोविदः
सूत्रादीनां गृहाङ्गैश्च पीडा चेत् सर्वनाशनम् १७

तस्मात् सर्वप्रयत्नेन सूत्रादीनि विवर्जयेत्
पूर्वादिमध्यसूत्राणि चान्नं धान्यं धनं सुखम् १८

इति नामानि तन्नामा चत्वारि स्युर्गृहाणि च
अन्नालयं धान्यालयं धनालयं सुखालयम् १९

कर्तव्यं वास्तुमध्ये तु मराडपं प्रथमं बुधैः
वास्तुव्यासचतुर्भागं मराडपस्य तु विस्तृतम् २०

पञ्चषट्सप्तभागाष्टनवभागैकमेव वा

सप्तहस्तादि षरामानं द्विद्विहस्तविवर्धनात्  २१

आसप्तदशहस्तान्तं श्रेष्ठमध्यकनिष्ठकम्
एकभक्त्या द्विभक्त्या वा चतुष्पादाष्टपादकम्  २२

द्विजभूपतिवैश्यानां युग्मपादं प्रकीर्तितम्
शूद्राणामन्यजातीनामयुग्मस्तम्भमिष्यते  २३

द्विजवन्नृपवैश्यानां वैशिष्ट्यं मध्यवेदिका
त्रिकालबलिलब्धा च पुष्पगन्धादिपूजिता  २४

सा त्रितालसमुत्सेधा चोत्सेधसमविस्तृता
तन्मध्ये ब्रह्मपीठं स्याद् वेदिकार्धप्रमाणतः  २५

षट्षडङ्गुलहीनं स्यात् तन्मानं नृपवैश्ययोः
शूद्राद्यन्तरजातीनां न कुर्याद् ब्रह्मवेदिकाम्  २६

सायते चतुरश्रे वा तत्तदाकृति मराडपम्
पञ्चतालं समारभ्य त्रित्र्यङ्गुलविवर्धनात्  २७

नवधा तलिपायामाः सप्ततालान्तमानकाः
पञ्चाङ्गुलं समारभ्य त्रयोदशाङ्गुलान्तकाः  २८

नवधा पादविष्कम्भास्त्वग्रेऽष्टांशविवर्जिताः
पादोच्चार्धमधिष्ठानं षडष्टांशोनमेव वा  २९

पादोच्चे त्रिचतुर्भागं चतुरश्रं च वृत्तकम्
वस्वश्रं चित्रखराडं च स्तम्भानामाकृतिः स्मृता  ३०

शमीखादिरखदिरस्तम्भाश्च द्विजराजयोः
सिलीन्ध्रं पिशितं मधूकं वैश्यस्तम्भाः प्रकीर्तिताः  ३१

राजादनं च निम्बं च सिलीन्ध्रः पिशितिन्दुका
शूद्राणां स्तम्भवृक्षाश्च त्वक्साराः सर्वयोग्यकाः  ३२

पक्वेष्टकाभिः सुधया मण्डपं द्विजभूपयोः
वैश्यादीनामपक्वाभिर्नानालङ्कारशोभितम्  ३३

प्रपा वा तत्र कर्तव्या नालिकेरदलच्छदा
गृहमण्डपयोर्मध्ये त्रिचतुष्पञ्चषट्कराः  ३४

सर्वतः समविस्तारं प्रकुर्यादावृतं पथम्
एकहस्तं द्विहस्तं वा क्षुद्रे मार्गविशालता  ३५

अन्नागारादिमध्यं तु वास्तुमध्यात् प्रदक्षिणम्
आदित्यनन्दपातालभूताङ्गुलमिति क्रमात्  ३६

धर्मनन्दाष्टधात्वंशा अन्नागारादिपादगाः  ३७

एकैकाङ्घ्रिगतं तत्तत्स्तम्भस्थापनकर्मणि
वास्तुमध्यादुदक् पूर्वदक्षिणा परतः क्रमात्  ३८

गृहाङ्घ्रिमध्ययोर्मध्यभित्तिर्मध्यमिति स्मृतम्
अन्तर्मुखानि गेहानि वास्तुनश्च बहिर्मुखम्  ३९

महीधरेन्दुभल्लाटमृगादितिपदाश्रितम्
सौख्यं महीसुरावासं तत्तारायाममुच्यते  ४०

पञ्चादिनवहस्तान्तं मध्यार्धं च दशार्धकम्
सप्तैकादशहस्तं स्यादिति मानत्रयं विदुः  ४१

चूल्युच्चं सर्वगेहानां गृहान्तं विपुलं भवेत्
पादोदयसमा भित्तिः स्वपादत्रिगुणा ततिः  ४२

गेहतारचतुर्भागपञ्चभागान्तरं क्रमात्
पादव्यास इति प्रोक्तं गेहव्यासात्करात्तु वा ४३

यावन्तो विपुले हस्तास्तावदङ्गुलसंख्यया
सर्वेषामपि गेहानां स्तम्भविष्कम्भमिष्यते ४४

महेन्द्रांशे भवेद् द्वारं मुख्यांशे वारिनिःस्रवम्
ब्राह्मणानामिदं सर्वं सम्पदां स्यात् सदास्पदम् ४५

महेन्द्रार्कार्यके सत्ये भृशभागे महानसम्
त्रिहस्तं पञ्चहस्तं च त्र्यर्धहस्तं षडर्धकम् ४६

चतुर्हस्तं सप्तहस्तं चतुरष्टार्धहस्तकम्
पञ्चहस्तं नवहस्तं पञ्चमानं महानसे ४७

गृहक्षतांशके द्वारं जयन्ते वारिनिःस्रवम्
प्राच्यावासं नृपस्योक्तं कोशवाहनवर्धनम् ४८

गृहक्षतार्किगन्धर्वभृङ्गराजे विवस्वति
धान्यालयं प्रकर्तव्यं तत्तरायाममुच्यते ४९

पञ्चहस्तं नवहस्तं षडर्धं च दशार्धकम्
सप्तैकादशहस्तं स्यान्नवत्रयोदशहस्तकम् ५०

एकादशपञ्चदशहस्तं पञ्चप्रमाणकम्
पुष्पदन्तपदे द्वारं वितथे वारिनिःस्रवम् ५१

विशां दक्षिणवासं स्याद् धनधान्यसुखावहम्
पुष्पदन्तेऽसुरे शोषे वारुणे मित्रके पदे ५२

धनालयं धान्यसमं किञ्चिन्न्यूनत्वमिष्यते

शूद्रस्य पश्चिमे वासं धनधान्यशुभप्रदम्  ५३

भल्लाटांशे भवेद् द्वारं सुग्रीवे वारिनिःस्रवम्
चतुर्णामपि वर्णानामुक्तो वासविधिक्रमः  ५४

स्तम्भस्योपरि कर्तव्यं पोतिकोत्तरवाजनम्
तुलाजयन्त्यनुमार्गं फलकां भूमिकल्पनम्  ५५

कपोतं तत्प्रतिश्चैव वितस्तिजलकानि च
मुष्टिबन्धं मृणाली च दण्डिकां च लुपाक्रियाम्  ५६

लुल्पाप्रच्छादनं चैव मुखपट्टिकयान्वितम्
गृहस्य दक्षिणे पार्श्वे द्वारं प्रति महद् भवेत्  ५७

द्वित्रिहस्तत्रिहस्तार्धं चतुर्हस्तं च भक्तयः
चतुष्पदाद्याद्वात्रिंशद्भक्त्या वा वास्तुमण्डपम्  ५८

एकभक्त्याद्येकत्रिंशद्भक्त्यन्ताल्पेऽन्तरप्रपा
सपदा च सविष्टा च नालितालदलच्छदा  ५९

गृहाणां गर्भस्थानं तु प्रवक्ष्याम्यनु पूर्वशः
देवानां चैव विन्यासे विशेषेण प्रभागतः  ६०

पुष्पदन्ते च भल्लाटे महेन्द्रे च गृहक्षते
दक्षिणे नेत्रभित्तौ तु सौम्यादौ तु चतुर्गृहे  ६१

भित्तिव्यासे नवाष्टांशे बाह्ये तु चतुरंशकम्
अन्तस्त्रयांशकं नीत्वा मध्ये गर्भं निधापयेत्  ६२

स्वामिवासस्य विस्तारे पञ्चषट्सप्तभागिके
नीत्वान्तर्भागिकं नेत्रं तत्प्रदक्षिणभागिके  ६३

स्तम्भमूले विधातव्यं गर्भं गुह्यतरं वरम्
द्वारप्रदक्षिणे स्तम्भे कभित्तौ गूढपादके ६४

वास्तुमण्डपमध्यस्य दक्षिणे वाङ्घ्रिमूलके
पिण्डभिन्नगृहे गर्भस्थानं पञ्चविधं भवेत् ६५

तस्योपरि निधातव्यं मुहूर्तस्तम्भमुतमम्
विधिज्ञैस्तत्र खदिरं खादिरं च मधूककम् ६६

राजादनं यथासंख्यं विस्तारायाममुच्यते
भानुरुद्रदशद्वारवितस्त्यायामसंयुताः ६७

तत्संख्याङ्गुलविस्तीर्णाः स्वाग्रेऽष्टांशविवर्जिताः
भूतसार्धचतुर्वेदगुणतालानिखातकाः ६८

वृत्तकुड्मलखण्डाग्रबुद्बुदाकृतिशीर्षकाः
द्विजादीनां चतुर्णां हि स्तम्भाः सम्यक् प्रपूजिताः ६९

पिण्डशाला च कर्तव्या त्यक्तमध्यस्थपादका
गृहमध्यमभित्तिश्च पादमध्यमवर्जिता ७०

तामाश्रित्य तु कुल्याभद्वारद्वयमिहेष्यते
यत्र चाभ्यन्तरद्वारं पूर्वदक्षिणतो दिशि ७१

दक्षिणे गृहपार्श्वे तु गृहपार्श्वे महानसे
अभ्यन्तरे तु यद् द्वारं पश्चिमोत्तरतो दिशि ७२

उत्तरे गृहपार्श्वे तु पार्श्वे पश्चिमतो गृहे
शालासु भिन्नशालासु सन्धिकर्म न कारयेत् ७३

देवतास्थापनं पिण्डशालासु तु विधीयते

इष्टतो बाह्यदेवानां पद्मजस्य निवेशनम् ७४

शेषाश्च निष्पदाः सर्वे रक्षणार्थं निवेशिताः
कदाचित् पिण्डशालायां मध्यं न प्रविधीयते ७५

पार्श्वयोः पृष्ठतः पूर्वे पादानां च समुच्चयम्
प्रवक्ष्याम्यनुपूर्वेण हस्तसंख्यावशात् पुनः ७६

त्रिहस्ते वा त्रिहस्तार्धे स्तम्भा अष्टौ समाहिताः
चतुर्हस्ते च सार्धे च पञ्चहस्ते च सद्मनि ७७

द्विरष्टस्तम्भमुद्दिष्टं षट्षडर्धे च सप्तके
त्रिरष्टाङ्घ्रयः उद्दिष्टाः सार्धाष्टनवहस्तके ७८

चतुरष्टाङ्घ्रयः प्रोक्ता दशार्धैकादशेऽपि च
पञ्चाष्टस्तम्भ संख्याः स्युः सार्धे द्वादशहस्तके ७९

त्रयोदशविशाले तु षडष्टैवाङ्घ्रयः स्मृताः
विस्तारे च तथायामे समाः पादास्तु संख्यया ८०

सप्तहस्तं तु विस्तीर्णं षड्भागेन विभाजयेत्
द्विभागेन मुखेऽलिन्द्रं नवहस्तेऽष्टभागके ८१

त्रिभागं पुरतोऽलिन्द्रमेकादशविशालके
दशभागे चतुर्भागमर्कभागे त्रयोदशे ८२

षडंशं पुरतोऽलिन्द्रमेवं भागक्रमं विदुः
स्वामिस्थानस्य विस्तारं चतुष्पञ्चाशदङ्गुलम् ८३

अष्टसप्ततिमात्रं हि महत्त्वं तु विधीयते
षट्षडङ्गुलवृद्ध्या तु पञ्चमानं विधीयते ८४

षष्टिभागे कृते स्तम्भे षोडशांशेन वेदिका
वेदिकाद्विगुणं पादं शेषं प्रस्तरमानकम्  ८५

पादबन्धमधिष्ठानं पादं सर्वाङ्गसंयुतम्
उत्तरोपरि भूतानि कपोतप्रतिसंयुतम्  ८६

व्यालेभमकरैः सिंहैर्नासिकाद्यैरलंकृतम्
द्वारतोरणसंयुक्तं विचित्रान्तरभित्तिकम्  ८७

स्वामिवासमिदं वासे कर्तव्यं चात्र मण्डपम्
न जातु स्वामिनो वासे वंशानुगतशायनम्  ८८

स्वामिस्थाने स्थिताः स्तम्भा नेत्रभक्त्या प्रकीर्तिताः
एकैकान्तरिताः पादा निरन्तर निवेशिताः  ८९

मूलस्तम्भार्धविस्तारा यथेष्टालं कृतैर्युताः
उपर्युपरि वासानां स्वमिस्थानं विधीयते  ९०

इष्टकासुधया वाऽपि फलकामयभित्तिकम्
हेमताम्रादिकं चैव राज्ञां यदि विचित्रकम्  ९१

अन्नागारादिषु द्वौ द्वौ पाञ्चालादिलुपोच्छ्रयौ
लुपाक्रियाक्रमं सर्वं पूर्ववत् परिकल्पयेत्  ९२

धनञ्चयो मन्दवेधे तीव्रे स्याद् ऋृणबन्धनम्
त्रिचूली वैश्यशूद्राणां पञ्च सप्त महीभृताम्  ९३

ब्राह्मणानां नवैवं तु एकादशं तु दैविकम्
पाषण्ड्याश्रमिणं युग्मसंख्या चूली विधीयते  ९४

गर्भाधानं चङ्क्रमणं कभित्तिं मुख्य वासके

शिलास्तम्भं तलं कुड्यं नृणां वासे न कारयेत् ९५

तृणाद्यैर्मृन्मयं छाद्यं लोष्टैश्छाद्यममृन्मयम्
ब्रह्मस्थानं तलान्निम्नं गृहान्तः स्थलमिष्यते ९६

निम्ने गृहस्थले द्वारं प्रच्छन्नाजलभूमिकम्
सर्वेषामपि वर्णानां पादोच्चार्धं मसूरकम् ९७

केचित् स्वभर्तृवक्षोरुनाभ्युत्सेधं वदन्ति वै
अधिष्ठानं च याम्यादि चतुर्गृहविधौ क्रमात् ९८

एकस्यैव प्रधानत्वादीदृशेषु गृहेषु वै
तस्य कर्तुश्च भोगानां स्थानं तत्रैव कल्पयेत् ९९

काञ्चीलवणयोः पात्रं प्रागुदग्दिशि विन्यसेत्
अन्तरिक्षे भवेच्चुल्ली सत्यके स्यादुलूखलम्
ऐशान्यां पचनस्थानं सर्वेषां देहिनां हितम् १००

वसुभान्वङ्गुलवैपुलोच्छ्रिताभ्यां नयनांशाक्षकराग्रजप्रवृद्ध्या
सविकाराङ्गुलरत्निकान्तमानं कथितं पञ्चविधं हि चुल्लिभेदम् १०१

चतुरर्काद्यवसानमास्यतारं पुटतारं च तथैव पृष्ठ कूटम्
समतुङ्गं विपुलं तु चुल्लिकार्थं ह्यधमानामधमादिमानमेव १०२

नरशीर्षकवन्नृपस्य चुल्ली चतुरश्रं द्युसदां महीसुराणाम्
चतुरायतकं विशां परेषामितरेषामितरेषु सर्वमिष्टम् १०३

इन्द्वग्निभूतमुनिनन्दकरुद्र संख्याश्चूल्यो नृणाममरधाम्नि समासमाः स्युः
सर्वाः सुरावनिसुरावनिपेषु योग्याः शेषेषु तत्तदुदिताश्च मता यमीन्द्रैः

अन्नप्राशनमार्यांशे चेन्द्रांशे च सविन्द्रके १०५

श्रवणं तु विवस्वांशे मित्रांशे तु विवाहकम्
क्षौरमिन्द्रजये विद्याद् वायौ सोमे च संमतम् १०६

व्ययं चोपनयं चैव पितृदौवारिके जले
सुगले पुष्पदन्ते च प्रसूतिगृहमिष्यते १०७

जलकोशमापवत्से कुण्डमापे विधीयते
अङ्कनं तु महेन्द्रांशे पेषणी च महीधरे १०८

वस्तुभेदं प्रवक्ष्यामि पूर्वोक्ते सद्मनि क्रमात्
दिशाभद्राख्यमादौ तु गरुडपक्षं ततःपरम् १०९

कायभारं तुलानीयमिति वस्तु चतुर्विधम्
गेहायामसमं दिक्षु भाद्रकं दिशिभद्रकम् ११०

अङ्गणं दिक्षु कर्तव्यं विदिक्षु प्रतिवाटभूः
शेषं पूर्ववदुद्दिष्टं विशेषाद् द्विजभूपयोः १११

वेश्मन्यपि यथा राज्ञां गरुडपक्षविधिक्रमः
विस्तारद्विगुणायाममायामं पञ्चभागिकम् ११२

द्विभागं पश्चिमे त्यक्त्वा शेषमष्टाष्टभागिकम्
मण्डपादीनि सर्वाणि पूर्ववत् परिकल्पयेत् ११३

प्रधानं दक्षिणावासं शेषं भोगाधिवासकम्
भृङ्गराजनि दौवार्ये सुग्रीवे पितृभागिके ११४

अरिष्टागारदिष्टं च तत्रोपस्करभूमिकम्
वाहनं द्वारवामे च दानशाला च वारुणे ११५

असुरे धान्यवासं स्यादायुधं चेन्द्रराजके

मित्रवासं तथा मित्रे रोगे लूखलयन्त्रकम्  ११६

भूधरे कोशगेहं स्यान्नागांशे घृतमौषधम्
जयन्ते चापवत्से च पर्जन्ये च शिवे क्रमात्  ११७

विषं च विषघातं च कूपं देवगृहं भवेत्
सवित्राद्यन्तरिक्षान्ते सव्यञ्जनमहानसम्  ११८

वितथे पूष्णि साविन्द्रे भुक्तिगेहं मनोरमम्
एवमैश्वर्ययुक्तानां वैश्यानां प्रविधीयते  ११९

विशां यथार्हकं सर्वं त्यक्तपश्चिमभागकम्
कायभारमिति प्रोक्तं तुलानीयं प्रवक्ष्यते  १२०

विस्तारद्विगुणायाममायामं सप्त भागकम्
त्रिभागं वस्तुमध्ये तु चतुष्षष्टि विभाजिते  १२१

मण्डपादीनि सर्वाणि पूर्ववत् परिकल्पयेत्
तत्पूर्वापरयोर्द्विद्विभागं त्यक्त्वा प्रयत्नतः  १२२

तत्र स्थानमलङ्कुर्याद् यथायुक्ति विचक्षणः
वायुभल्लाटसोमेषु भवेदास्थानशालकम्  १२३

मुख्यांशे लूखलं चापे गणिकानां निवेशनम्
वाहनं पुरतो वामे शेषं तत्र यथेष्टतः  १२४

शूद्राणां भोगयुक्तानामेवं सम्यक् प्रकीर्तितम्
पर्यन्ते भित्तिके तस्मिन् जलपातं कुलक्षयम्  १२५

नीव्रसंक्रमणं तस्मिन्नास्ति चेद् यदि वेश्मनि
सर्वेषामपि वर्णानां सर्वसंपत्क्षयो भवेत्  १२६

गृहविस्तारमानेन चायामेन गृहोन्नतम्
उक्तप्रकारं शुभदमन्यथा चेद् विनाशनम्  १२७

स्तम्भायामेऽष्टांशके सार्धषट्द्वारायामं नन्दभागे तदर्धे
त्यक्त्वार्धांशं शेषभागं विशालं द्वारं नृणां धाम्नि कुर्याद् विधिज्ञैः  १२८

पादायामे पञ्चभागे युगांशं द्वारायामं शेषभागं षडंशम्
त्र्यर्धं द्व्यर्धं चोत्तराधः प्रतिः स्याद्द्वारे बन्धं पूर्ववत् तस्य तारम्  १२९

तरुणरविमयूखप्रेक्षणादन्नशालं ह्यतिनतमपराह्णे वारुणाद् रश्मिजालम्
धनगृहमतितुङ्गं दुर्निरीक्षं त्रिशङ्कोरतितरमुरुतुङ्गं दक्षिणागारमिष्टम्  १३०

मुनिशुभकररश्मिप्रेक्षणादत्र हेतोः सुखगृहमतिनीचं चाथ कर्तव्यमेव
द्विजनृपवणिजां वै सद्मनां शूद्रकाणामुदयनतविभागं प्रोक्तमाद्यैर्मुनीन्द्रैः
१३१

गृहगतवरमैशं राक्षसे पुष्पदन्ते शुभकरमथ भल्लाटांशकेंऽशे महेन्द्रे
धनकुलपशुवृद्धिं शंसते तस्य भर्तुर्गृहगतशुभमानं पादमध्यं च भित्तेः
१३२

दक्षिणावसथकं गृहेशितुर्वामरङ्गमुदितं तु योषितः
तद्विपर्ययमशोभनं तयोश्चित्तदुःखमनिशं ददाति हि  १३३

मध्यं प्रोक्तं वस्तुगेहाङ्घ्रिकानां भित्तेर्युक्त्या तत् क्रमं सम्पदृद्ध्यै
तत्तन्मिश्रं सर्वसम्पत्क्षयं स्यात् तस्मात् सम्यक् संपरीक्ष्यैव कुर्यात् १३४

मेषे वृषे चान्नगृहं प्रकुर्यान्मृगेन्द्रके कर्कटके च धान्यम्
धनं तुलायामथ वृश्चिके वा सुखालयं वै मकरे च कुम्भे  १३५

अनिमिषयमकन्याकार्मुके संस्थिते चेत्
सकलदिशि न कुर्यान्मन्दिरं कर्मविद्वान्

यदि विधिमनवेद्य स्वेच्छया कर्तुमिच्छेद्
व्रजति यमपुरं वा दासनाशो भवेद् वा १३६

इति मयमते वस्तुशास्त्रे चतुर्गृहविधानं नाम सप्तविंशोऽध्यायः

## अथ अष्टाविंशोऽध्यायः

अथ निष्पन्नगृहं प्रविश्य तं त्वरितं न प्रविशेदनिष्ठितम्
यदि निष्पन्नमवेशितं चिरं सुरभूतादिगणाश्चरन्त्यलम् १

अथ कर्मान्तमुपेत्य तद् गृहं शुभनक्षत्रतिथौ च वारके
शुभहोरासुमुहूर्तकांशके करणे लग्नयुते विशेच्छुभम् २

पूर्वेद्युर्वासयित्वा द्विजपशुवृषभांस्तर्पयित्वा जलाद्यैः
स्वाध्यायैर्होमशान्तिद्विजवरमुदितैस्तद्गृहं स्वस्तिवाच्यैः
पूतं कल्कैर्हरिद्रागरुसरुषपकुष्ठादिकानां वचानां
कुड्ये संलेपितं तैः सह भुवि सलिलैश्चन्दनस्यानुसिक्तम् ३

भवनस्योत्तरपूर्वभागे त्वधिवासं निशि चारभेत् सुधीः
सवितानादि पताकलङ्घनैर्बहुवर्णाम्बरचित्रमण्डपे ४

सितवस्त्रधरः सुवर्णयज्ञः सितपुष्पश्च सितानुलेपनः
स्थपतिः सुमनाः सुवर्णरत्नैर्विविधैर्निष्ठितभूषणान्वितः ५

कलशान् पञ्चकपञ्च वार्युतान् नववस्त्रान् मणिहेमसंयुतान्
मतिमान् शालिगिरौ सतण्डुले ह्युपपीठे तु पदे न्यसेत् ततः ६

बल्यन्नं सितरक्तपीतकृष्णं मुद्गान्नं पयसान्नकं यवान्नम्
पिङ्गान्नं कृसरान्नकं गुलान्नं शुद्धान्नं कलशोत्तरे न्यसेत् ७
पर्यङ्कोपरितल्पबन्धने शयने दीपतुरीयसंयुते
निवसेदम्बरवेष्टिते शुभे स्थपतिः शम्बरमुच्यते सदा ८

बलिचरु सकलान्नं रत्नहेमप्रयुक्तं

दधि गुलमधुपुष्पाज्याक्षताभिस्तु लाजैः
रजनि तगरुकुष्ठानां प्रयोगेऽच्छकल्कै-
र्युतमपि हि तदानीं निक्षिपेद्धेम पात्रे ९

भवनविहितदेवान् स्वस्वकोष्ठे निधाय
स्थपतिरमलकुम्भान् हस्तमात्रावलैश्च
सिततरकुसुमं वै यूपदीपं च गन्धं
दृढतरमतिमद्भिस्तक्षको धारयित्वा १०

प्रणवादिनमोन्तकेन नाम्ना विहितं स्वाम्बरमादरात् सुरेभ्यः
प्रथमं विधिना त्वजाय नत्वा बलिमात्रं विनिवेदयेत् तु तस्मै ११

स्वायंभुवः स्वस्य चतुर्मुखेषु चतुष्टयानां दिशि तैतिलानाम्
यथार्हकैः स्वैर्बलिभिश्च पुष्पकैः सगन्धधूपादिभिरत्र तर्पयेत् १२

इन्द्राय पूर्वदिशि बन्धुभिरग्नयेऽग्नौ याम्ये यमाय निर्ऋतौ सहबन्धुवर्गैः
पित्रे प्रतीच्यपि बलिं वरुणाय दद्याद्वायौ सबन्धुरनिलाय बलिं नयेद्धि

सोमाय सोमपदके दिशि चोत्तरस्यां
मित्रैः सह स्वबलिमत्र निवेदयेत् तत्
पूर्वोत्तरे दिशि शिवाय सबन्धुवर्गै
रेवं हि दिक्षु च विदिक्षु बलिं विदध्यात् १४

ईशे चरक्यै ज्वलने विदार्यै स्यात् पूतनायै पितृबाह्यभागे
एवं पुनर्मारुतबाह्यभागे स्यात् पापराक्षस्यपि भोजनीया १५

स्तम्भे वनाय च तृणाय दिवाचरेभ्यो
दिक्ष्वेव तत्र च विदिक्षु निशाचरेभ्यः
उर्व्यां क्षिपेद् बलिमथोरगदेवताभ्यो
धर्माय कीर्य हि दिवेऽखिलदेवताभ्यः १६

द्वारस्य वामपदके मनवे परेभ्यो
दद्युः श्रियै च शयने विधिना बलिं तत्
शालासु मराडपसभास्वथ मालिकायां
मध्येऽङ्गरो तु मुखमराडपके विमाने १७

धाम्न्यष्टकाष्टपदकेऽभ्यमरान्तरांस्तानाहूय गन्धकुसुमादिभिरर्चयित्वा
दत्त्वोदकं सुबलिमत्र निधाय पश्चाद्देयं जलं स्थपतिना विहितं च धूपम्
१८

तुलसिसर्ज्जरसार्जुनमञ्जरीघनवचाकपटोलसगुग्गुलः
त्रपुषहिङ्गुमहौषधिसर्षपाः कुरवकोऽत्र सदैव सधूपराट् १९

ददति धान्यधनानि बहून्यहो हरति भूतपिशाचसराक्षसान्
दहति कीटभुजंगममक्षिकान् मशकमूषिकलूतिकलूतकान् २०

पश्चाच्च पात्रान्तिकपश्चिमांशे धान्यास्तरे तक्षकसाधनानि
सर्वाणि विन्यस्य बलिं च दत्त्वा तेभ्यो वदेत् संग्रहमध्यमस्थः २१

निरुजा मृदिता सधना प्रथिता यशसा महदद्भुतवीर्ययुता
सततं निरुपद्रवकर्मयुता पृथिवी पृथु जीवतु धर्मविधेः २२

धारानिपातात् सलिलप्रकोपाद् दंष्ट्रानिपातात् पवनप्रकोपात्
अग्नेश्च दाहान्मुषिताच्च चोराद् रक्षन्त्विदं सद्म शिवं च मेऽस्तु २३

उक्त्वैवमेवमखिलान्यपि साधनानि
स्थित्वा प्रणम्य शिरसा स्थपतिः कराभ्याम्
आदाय तानि सकलानि तदीयबाहौ
सम्यङ् निधाय विधिना स्वजनैः सभृत्यैः २४

संग्राह्य बन्धुजनपुत्रसहायकाद्यैर्गच्छेत् स्वकीयभवनं प्रति तुष्टचेताः
संन्यस्य सर्वमथ तद्बलिशेषमन्नं

सम्यक् क्षिपेत् सलिलके गृहदेवताभ्यः २५

अथ सम्यग् गृहमार्जने कृते सितकुष्ठागरुचन्दनाम्बुभिः
कलशोदैरपि गन्धसंयुतैर्मणिहेमाम्बुभिरत्र सेच्यते २६

अथ सिद्धार्थकलाजशालिकान् भवनाभ्यन्तरतो विकीर्य पश्चात्
उपदंशैर्युतमष्ट धान्ययुग् धनरत्नं गृहवस्तु वेश्य सर्वम् २७

गृहपतिर्गृहिणी च समङ्गलौ सुजनसुभृत्यसुतानु जाभिधौ
स्वभवनं गृहवस्तुसमग्रकं प्रविशतामनुचिन्त्य जगत्पतिम् २८

प्रीत्या प्रविश्य गृहवस्तु निरीक्ष्य सर्वं
तौ दंपती च शयनेऽप्युपविश्य पश्चात्
सव्यञ्जनोदनमथो गृहिणी गृहीत्वा
निर्वर्तयेद् गृहबलिं बलिशेषमन्नम् २९

स्वमूलदास्यै स्वकुलानुगायै दत्त्वाऽथ देवद्विजतक्षकादीन्
धनैश्च रत्नैः पशुभिश्च धान्यैः संतर्प्य वस्त्रादिभिरत्र नित्यम् ३०

स्वजनगुरुजनाद्यैर्मित्रभृत्यादिवर्गैरनुगतजनबृन्दैरत्र भोक्तव्यमादौ
गृहपतिरपि पत्नी तत्र नत्वा गुरूंस्तत्सुतजनमपि पौत्रौर्भोजयेत् तान्
क्रमेण ३१

अम्भोभिः पूर्णकुम्भैः सफलकदलिका वञ्जुलैः पूगवृक्षै-
र्दीपैरश्वत्थपत्रैः सिततरकुसुमैः साङ्कुरैः पालिकाभिः
कन्याभिर्मङ्गलाभिर्युवतिभिरमलैर्विप्रमुख्यैरुपेतं
द्वारं तत्तोरणाढ्यं गृहमनघतरं वेशयद् वेश्मनाथम् ३२

सितवस्त्रजलप्रदीपपूर्णं सितकुसुमाम्बरधारणं सुहृष्टम्
गृहपतिपुरतो यथा विवाहे गृहिणिकरग्रहणं गृहप्रवेशे ३३

अदत्तबलिभोजनमनाच्छदमगर्भं द्विजस्थपतिकादिभिरतर्पितमतल्पम्
विशत्यपि गृहं यदलमेव हि विपत्त्यै विपत्पदविमेयमति दुष्टहृदयः सः
३४

अतिसंतुष्टमना गृहेश्वरः सुतयोषित्स्वजनप्रियानुगः
स्वगृहं प्रविशेत् प्रविश्य चैवं शुभवाग्भिः परिपूर्णकर्णकः ३५

ग्रामाग्रहारपुरपत्तनकादिकानां देयो बलिः कपदके च विदिक्षु दिक्षु
शस्तौ चतुष्कसहिते सुरमन्दिरे च श्रेष्ठे कजायनिलयेऽखिलदेवताभ्यः
३६

इति मयमते वस्तुशास्त्रे गृहप्रवेशो नाम अष्टविंशोऽध्यायः

## अथैकोनत्रिंशोऽध्यायः

अथ वक्ष्ये राजगृहं संक्षेपाद् बाह्यनगरशिबिरयुतम्
त्रिचतुर्भागे नगरे प्राच्यां वाप्युक्तशालायाम् १

नरपतिगृहमधिराज्ञो दक्षिणतः पश्चिमांशे तु
पार्ष्णीयादिकभवनं स्यात् सप्तनवांशे प्रतीच्यां तु २

अङ्कुरादीनां भवनं सेनेशानां हि तत्रैव
विश्वनृपैश्वरभवनं मध्ये वासं त्रिभागभागेषु ३

नगरांशवशान्मानं ह्येतद्दण्डेन संवक्ष्ये
सचतुर्चत्वारिंशच्छत दण्डं वेश्मविस्तारम् ४

युगवसुभानुविकारैर्दण्डैः क्षपयेत्ततः क्रमशः
द्वात्रिंशद्दण्डान्तं वेश्मव्यासं तथोक्तानाम् ५

तत्तद्वेश्मविशालादूर्ध्वे संवर्द्धयेत् तु तथा
सप्तचतुर्दण्डयुतपञ्चशतज्येष्ठविस्तारम् ६

द्वात्रिंशद्दण्डादाद्वात्रिंशन्मानमेवमुद्दिष्टम्
ज्येष्ठाज्येष्ठविशालमन्येषामन्यदिष्टं स्यात् ७

दैर्घ्यं व्यासद्विगुणं द्विगुणं पादोनमर्धकं पादम्
द्वादश सालाकारं चतुरं वृत्तं तदायतं शकटम् ८

नन्द्यावर्त्तं कौक्कुटमिभकुम्भं स्वस्तिकं चैव
गोलावच्च मृदङ्गं मग्नमिति ह्येकमानयुतम् ९

इष्टव्यासायामं प्रागेवालं विचिन्त्य कर्तव्यम्
तस्माद्धीनं यत्तन्निष्पन्नं वास्तु येन केनापि १०

अशुभमवनीपतेस्तत् सततं विपदां पदं भवति
पौराणां यद्वस्तु वर्धितुमिच्छेद् बहिस्ततस्तस्मात् ११

प्रागुत्तरदिशि वृद्धिः शस्ता परितस्तु वा न्याय्या
प्रागङ्गमथ मुख्यं दक्षिणतो वाप्यथाङ्गणं श्रेष्ठम् १२

वेश्माभ्यन्तरमध्ये दण्डार्धव्यासतुङ्गपीठं स्यात्
दण्डेन बहिस्तस्मात् पीठेनैवात्र चैव सह वेदी १३

तद्वेद्या दक्षिणतः पञ्चकषड्ढस्तदण्डकं नीत्वा
क्षोणीभृतां प्रतिभवनं वेद्या अपरे तु सूत्रमध्यगतम् १४

तद्वेद्या उत्तरतस्तावन्मानं विहाय तद्वेद्याः
प्राक्सूत्रमध्यगतं देव्या धाम्नस्तु तत्र तत्रैव १५

त्रिःषोडशदण्डं वा द्वात्रिंशद्दण्डमानकं वाऽपि
सचतुर्विंशतिदण्डं षोडशदण्डं तु वाथवा नीत्वा १६

नृपतेर्दैर्घ्यायामं बहिः प्राकारं त्रिहस्तविस्तारम्

एकादशकरतुङ्गं तद्बाह्ये सप्तहस्तमानेन १७

परितः पन्थास्तिस्त्रस्तस्मान्नवदण्डमावल्याम्
वेश्मावल्या वृत्तं कुड्यततिस्त्वेकदण्डमानेन १८

सार्धदशारत्न्युच्चं तस्मात् पन्था ब् अहिस्तु नवहस्तैः
तस्माद् द्विषोडशभिर्दण्डैर्मर्यादिरेव भित्तिः स्यात् १९

व्यासं सपाददण्डं पञ्चदशारत्निभिस्तु तत्तुङ्गः
भित्तिरभ्यन्तरतः परितो मार्गस्त्रिदण्डेन २०

द्वादशभवने रत्नावेशनानि योज्यानि
भित्त्यभ्यन्तरतो वा बाह्याद् वा मानयेद्दृढतरधीः २१

त्रिप्राकारं त्रिपथं त्रिभागयुग्घीननृपभवनम्
सचतुर्गोपुरकान्तं मुखगोपुरमुन्नतं हि तत्रैव २२

निम्नं पश्चिमवेशं मुख्यं स्यात् प्राङ्मुखं भवनम्
दक्षिणमुखमपि वाऽथ नोदक्प्रत्यग्दिशि सुभद्रमुखम् २३

पञ्चमुखं त्वथ राज्ञां नेष्टं स्याद् वेशनं च यत्तत्स्यात्
राज्ञां श्रीदेवीनामालयकान्तरालयं केचित् २४

अथ मध्ये वाङ्गणकं शतपादयुता प्रपा वा स्यात्
दक्षिणतो राजगृहमभिषेकं स्यात् प्रतीचीतः २५

उत्तरदिशि भवनं स्याद् राजमहिष्यास्त्वनेकमेकतलम्
पश्चिमदिग्गतभवनं प्राङ्मुखमेवावनीपतेर्मुख्यम् २६

परितः परिखा बाह्ये प्राकाराद्ध्येव द्वित्रिदण्डानि
नवदण्डविशालान्तं परिखाविपुलं समुद्दिष्टम् २७

परिखाया बहिरबहिर्मार्गविशालस्त्रिदण्डेन
परिखामूलविशालं स्वव्यासादष्टकेन भागेन २८

गाम्भीर्याद् युक्तिवशादाकृत्या चैव पालिकाभासा
भवनस्य बहिर्देव्या यानि गृहाण्यत्र तत्र युक्त्या तु २९

तानि च दैविकभागे सम्यग् वक्ष्येऽहमत्रापि २९-२

अन्तर्मण्डलबाह्यं तु दैवतांशवशाद् गृहम्
अर्यांशे द्वारहर्म्यं स्याच्चेन्द्रे सूर्येऽङ्गणं भृशम् ३०

भृशे व्योम्नि च वृत्तं स्यात् पूष्णे हेमं सदक्षिणम्
सालानां वितथे राक्षादभूदङ्गणकं विदुः ३१

सेनावेशनहर्म्यं तु यमभागेऽतितुङ्गवत्
गन्धर्वे नीडभा नृत्तयोग्या रङ्गविभूषिता ३२

विमानमन्दिरं वाऽपि शाला वा हर्म्यमेव वा
भृङ्गराजेऽश्वशाला स्याद् मृषे चार्तवसूतिका ३३

पितरि स्थानहर्म्यं स्याद् दौवारिकसु कण्ठयोः
जललीला विधातव्या पुष्पदन्ते खलूरिका ३४

लवणं तत्र वेज्ञेयं मरीचाद्यं यथोचितम्
वरुणासुरशोषेषु मित्रे स्यात्सङ्करालयम् ३५

राजदेवीगृहं गर्भागारं दक्षिणवामयोः
गेहं नृत्तरसाङ्गानां मित्रे सोपस्करं गृहम् ३६

अन्तर्विवृत्तवेशार्थं रोगादिमुपदोपणे
वर्धमानादिकं चापि शालानां पादशालकम् ३७

नागे सैरन्ध्रिधात्रीणां मुख्ये कन्यागृहं भवेत्
भैषज्यं चापि भल्लाटे मृगे सांवाहिकागृहम् ३८

रुचकादिचतुःशालाविमानं वात्र योजितम्
अभितो मज्जनागारमुदित्यामापवत्सयोः ३९

पानीयोष्णोदकं धाम यच्च प्रासादवद्बुधैः
स्वेष्टदैवतमीशाने जयन्ते च विधीयते ४०

महेन्द्रे भोजनस्थानं महीधरमरीचयोः
संबाधं वाऽत्र कुर्वीत सभापार्वतकूर्मवत् ४१

द्वारश्च भित्तयः सर्वाः स्वामिवाञ्छवशान्मताः
प्रथमावरणे प्रोक्ता द्वितीयावरणे क्रमात् ४२

इन्द्रे चादित्यके छत्रभेर्यादीनां निवासकम्
शङ्खकाहलतूर्याणामन्येषां तत्र सम्मतम् ४३

सत्ये दानार्चिता शाला भृशे धर्मोदकालयम्
पङ्क्तिके ज्वलनांशे तूलूखलं चेन्धनादिकम् ४४

पूषभागे तु साविन्द्रे वितथे वाजिशालकम्
पूर्वस्थाः पश्चिमद्वारा दक्षिणस्था उदङ्मुखाः ४५

पश्चिमस्थाः पूर्वमुखा उदक्स्था दक्षिणाननाः
सर्वे गृहस्य मार्गेणान्तरिताः सद्मसम्मुखाः ४६

राक्षसे शस्त्रशाला स्याद् द्वारशालाथ वामके
धर्मराजेऽन्नपानादिकर्मणामालयं भवेत् ४७

मध्यरङ्गसमायुक्तं चतुःशालां समालिखेत्
सेनापतेः प्रशस्ते स्याद् गन्धर्वांशे जयावहम् ४८

भृङ्गराजांशमान्या वाजिता वाशालका मता
व्यालकामीन्द्रकाजालि प्रभृतीनां मृषे भवेत्  ४९

निर्ऋतौ माहिषं गेहं दौवारिकसुकराठयोः
दानशालेन्नणशाला स्नानं पुष्पादिके गृहे  ५०

नागे रुद्रांशके चैव सायता दीर्घिका भवेत्
कन्यकानां च धात्रीणां मुख्यभागे विमानकम्  ५१

कञ्चुकीनां च मढूनामन्यत् सामान्यतो बुधैः
भल्लाटे सोममार्गांशे कृणवादीनां निवासकम्  ५२

कुब्जिनीवामनीकन्याषराडकीनां तथादितौ
धात्रीणामुदितौ गेहमीशे पर्जन्यके पदे  ५३

ग्रापे चैवापवत्से च वापी कूपं च दीर्घिका
पानीयसदनं पुष्पोद्यानं तत्रैव कीर्तितम्  ५४

जयन्ते दच्चिणाशाला दानशाला सुरेन्द्रके
धाम्नस्त्वभिमुखा सर्वा शाला प्राग्दच्चिणान्विता  ५५

इन्द्रे शास्त्रं रवौ गानं सत्ये चाध्ययनं भृशे
महामहानसं व्योम्नि गौर्वत्सा पूष्णि पावके  ५६

वितथे लवणं चैव वल्लूरस्नायुचर्मणाम्
राच्चसे नागवासम् च चित्रशिल्पादिसौधकम्  ५७

धर्मांशे दराडकावासं शूर्पं वा लाङ्गलं तु वा
गन्धर्वे भृङ्गराजे च रसादीनां निवासकम्  ५८

मृषे दाहस्तु पित्रंशे दानं दौवारिके मतम्
सुग्रीवे मल्लधामं स्यात् पुष्पके युगकोष्ठकम्  ५९

वारुणे युवराजस्य शाला वा मालिका भवेत्
हयेभसदनं चैव पुरोहितगृहं तथा ६०

असुरे चन्द्रशाला स्याच्छोषे शरभकालयम्
खरोष्ट्रायतनं रोगे भैषज्यं च प्रकल्पयेत् ६१

वायौ वापी भवेद्गोत्रनागे पुष्करणी च वा
मुख्यभल्लाटयोर्हस्तिवाजिशाला विधीयते ६२

सोमे प्रसूतिका चोपनीतिका च प्रवक्ष्यते
मृगादित्युदितीशाने जयन्ते दीर्घिकादिका ६३

विहारारामभूमिः स्यात् तत्र साङ्गणका सभा
तृतीयावरणे प्रोक्ताः सर्वेषामन्तराननाः ६४

वेश्मनां पुरतः पार्श्वे शेषराजबलावलिः
तद्बाह्ये वणिजादीनां वासपङ्क्तिस्तु युक्तितः ६५

अपरे दीर्घिकायामं वापीकूपादिकं क्रमात्
तत्रैवान्तः पुरं मूलभृत्यानां वासपङ्क्तिकम् ६६

सर्वत्र दीर्घिकारामवापीकूपसमन्वितम्
नानाजातिसामकीर्णं नानास्त्रीजनसंयुतम् ६७

नानाशिल्पसमोपेतं षड्बलैः परिपूरितम्
प्रागुदक्प्रागवाक्कोणे शाला हस्त्यश्ववासिका ६८

नानावर्णसमोपेता नानापणिकयान्विता
सर्वे वर्णा यथाराजा स्वस्वनाम्नाभिधानकाः ६९

नगरावृतसालः स्याद् विशालः स्याद् द्विदण्डकः
कथ्यते पञ्चषट्सप्तहस्तैर्वा विस्तरं क्रमात् ७०

व्यासद्वित्रिगुणोत्सेधं बहिः पांसुचयान्वितम्
अभीप्सितधनुर्वात्र परिखावप्रयोर्मतम् ७१

तद्बहिः शिल्पिकोपेतं सर्वत्रैव समन्वितम्
सर्वेषां संप्रशस्तं स्यान्महत्यल्पे च गोपुरम् ७२

स्वाम्यावास समं बाह्यगोपुरं प्रविधीयते
अल्पत्वे स्वामिवासस्य तलादेकोनमिष्यते ७३

नन्दरुद्रतले मूले सप्तभूद्वारगोपुरम्
एकैकतलसंख्याभिर्हीनमभ्यन्तरे क्रमात् ७४

विशेषेण नरेन्द्राणां महेन्द्रद्वारमुत्तमम्
राक्षसांशेऽथवा मुक्यं द्वारं पञ्चत्रिभूमिकम् ७५

पुष्पदन्ते च भल्लाटे द्वारं नीचतलान्वितम्
सुग्रीवांशेऽथवा मुख्ये जयन्ते वितथेऽपि च ७६

पक्षद्वारं प्रकर्तव्यमेकद्वितलसंयुतम्
सालं बहिः सालं सच्छिद्रं च सचक्रकम् ७७

विशेषेण नरेन्द्राणामिन्द्रभागे तु मन्दिरम्
ब्रह्मांशमाश्रितम् वेश्म सर्वसम्पत्सुखावहम् ७८

सकलक्षितिपेन्द्राणामेकादशतलं भवेत्
नवभूमिर्द्विजातीनां नृपाणां सप्तभूमकम् ७९

षट्तलं मण्डलीशानां पञ्चभूर्युवराजके
वैश्यानां तु चतुर्भौमं योधसेनेशयोरपि ८०

एकादित्रितलान्तं च शूद्राणां प्रविधीयते
सामन्तप्रमुखादीनां कारयेत् पञ्चभूमकम् ८१

युग्मं वायुग्मभूमं वा सर्वभूपेन्द्रमन्दिरम्
राज्ञां स्त्रीणां च देवीनां युग्मं वाऽयुग्मेव वा ८२

सदण्डकं लुपारोहि द्विनेत्रं प्रस्तरान्वितम्
मृन्मयं तु तृणाच्छाद्यमेकद्वितलसंयुतम् ८३

स्तूपि कर्णलुपाहीनं प्रशस्तं सर्वजातिषु
मिश्रितान्तरवर्णानां संपदैश्वर्यभोगिनाम् ८४

रुचकादिनिवासांश्च युक्त्या तत्र प्रयोजयेत्
अनुक्तं सर्वमत्रैव युक्त्या तद्योजयेत् सुधीः ८५

सामान्येनोदिता राज्ञां राजधानी तु पण्डितैः
विशेषेण नरेन्द्राणां वक्ष्ये वेश्म सनातनम् ८६

प्राकारो विपुलो दण्डः परिखा द्वित्रिदण्डकैः
वृत्तमार्गश्चतुर्दण्डैर्विंशद्दण्डैर्गृहावलिः ८७

वेश्यालीलावृतो मार्गस्त्रिचतुर्दण्डमानतः
वप्रमार्गस्त्रिदण्डं स्यात् प्राकारं पञ्चहस्तकम् ८८

तस्यापि परिखा प्रोक्ता चतुर्दण्डकैर्विस्तृता
परिखा परितो मार्गाश्चाष्टयष्टिविशालकाः ८९

ततोऽष्टचत्वारिंशद्भिर्विश्वा वलिरथावृता
तद्बहिः परितो मार्गाः षट्सप्त धनुरादिकाः ९०

चतुर्दण्डं ततो वप्रप्राकारं सप्तहस्तकम्
दण्डेनैकेन विधृतं नागपूरितबन्धनम् ९१

अष्टदण्डादिसूर्यान्तं परिखाविपुलं भवेत्
बाह्याभ्यन्तरमार्गं तु प्राकारविपुलं तथा ९२

तद्बहिर्दशदण्डेन सीमा सर्वजनालया
प्राकारं वा सवासं च परिखाश्च समीरिताः  ९३

वप्रप्राकारमित्येवं वास्तुविद्भिः प्रशंसितम्
पञ्चावरणके शस्तावरणकं द्विचतुष्टयैः  ९४

अन्तःपरिवृतं युक्तियुक्तं वीक्ष्य निवेशयेत्  ९४-२

आत्तविशालायामे पार्श्वांशेंऽशं मुखेऽमुखे नीत्वा
शेषे षण्णवभागे त्रिंशतिपञ्चांशब्रह्मवस्तु स्यात्  ९५

तस्मिन् शतपादयुतं मण्डपमन्तस्तु वेदिकापीठम्
अन्तरसं युतमेतत् प्रासादो वा प्रपा ततः परितः  ९६

पन्था भागस्तेन समादेशखलूरिका परितः
द्वारचतुष्टययुक्ता सौष्टिककोष्ठान्विता तथा शुभदा  ९७

युक्त्यासनमुदितं तन्मुखदेवांशके तु नवके वा
प्रासादादिष्टांशे दक्षिणतो राजकत्वे वा  ९८

उत्तरदिश्यपि दिष्टं ज्येष्ठयुवत्यालयं तु ततः
आर्यपदे निहितं तद्द्वारकहर्म्यं प्रतीच्यां वितनम्  ९९

शाला वा ह्यभिषेका सर्वविचित्रान्विता सभा तत्र
कर्णचतुष्टयकेऽन्तर्दृढपदयुक्ता सभा खलूरियुता  १००

प्रागुत्तरदिशि सलिलं स्नानं देवालयं तु होमाग्रम्
सेनालोकनहर्म्यं कूटं वा प्रागवाग्दिशि यत्तत्  १०१

पश्चिमदक्षिणकोणे नृत्तकवाद्यादिलीलया च सभा
उत्तरपश्चिमकोणे वासं स्याद् गीतकादिवनितानाम्  १०२

प्राच्यां दिश्यङ्गणकं दुर्गाया मेरुगोपुरकम्
प्रागुत्तरदिशि सलिलं तत्क्रीडाङ्गणंच सभा तत्र १०३

ग्रासनपानायतनं कुर्यात् सम्यक् तु लक्षणाभियुतम्
तत्प्राग्दक्षिणकोणे मध्याङ्गणकान्विता सभा तत्र १०४

रत्नाष्टपदवस्त्रप्रभृतीनां वासमिष्टं स्यात्
तत्परदक्षिणकोणे मध्याङ्गणकादिसंयुता च सभा १०५

तद्बहिरावृतभागे यत्र स्वभवनानि तत्र वनितानाम्
अपरे चारामयुतं वासक्रीडान्वितं तु तत्सजलम् १०६

प्रत्युदग्दिशि कोणे सर्वस्त्रैणान्वितं सभावासम्
अत्रानुक्तं सर्वं पूर्ववदिष्टं बहिस्त्वयं स्वबहिः १०७

एतत्पद्मकमुदितं राज्ञामावासकं मुनिभिः १०७-२

गृहीतविपुलायामे स्थानीयांशे तु मध्यमे
सकले ब्रह्मणः पीठं वेदिकान्तं तु मण्डपम् १०८

दक्षिणे चोत्तरे चैव राजदेवीगृहं भवेत्
पश्चिमे नृपतीशस्य मन्दिरं बहुभूमिकम् १०९

प्राच्यां दिश्यङ्गणं मध्ये द्वारशोभादिमण्डितम्
द्वारस्य पश्चिमे प्राच्यामभिषेकालयं भवेत् ११०

एतत्पीठपदे न्यासं तस्मिन् सालं तु पूर्ववत्
उपपीठपदे तस्माद् बाह्ये पूर्वादिषु क्रमात् १११

जयन्ते भानुभागे तु भृशभागेऽङ्गणं भवेत्
तन्मध्ये द्वारहर्म्यं स्यात् त्रितलादितलान्वितम् ११२

अग्नौ महानसं कुर्याद् वितथे मूलकोशकम्
तस्मिन् पदांशमाश्रित्य द्वारप्रासादयोगिकम्  ११३

यमे भृङ्गनृपे चैव पित्रंशे योषितां गृहम्
सुगले नृत्तशाला स्याद् वारुणे नृपमन्दिरम्  ११४

शोषे चान्तः पुरं वायौ वापीक्रीडासमन्वितम्
मुख्ये वासं महिष्यास्तु शाला वा मालिका भवेत्  ११५

सोमभागे तुलाभारं हेमगर्भं तु तत्परे
दित्यंशे हेमरत्नानि गन्धागारमिहोच्यते  ११६

तत्रैव हस्तिशाला स्यादीशे वापी च कूपकम्
वचोर्गेहं तु तत्रैव जलयन्त्रं विधीयते  ११७

तत्र सालं च मार्गं च पूर्ववत् परिकल्पयेत्
स्थण्डिलं तद्बहिर्भागे पर्जन्यांशे महेन्द्रके  ११८

भानुसत्यान्त रिक्षेष्वेवाङ्गणं कारयेत् सुधीः
महेन्द्रांशे भवेद् द्वारं चतुष्पञ्चतलान्वितम्  ११९

तत्रैव शङ्खभेर्यादितौर्यशब्दादिचित्रकम्
अनुक्तं पूर्ववत् सर्वं परितः प्रविधीयते  १२०

परमशायिबाह्ये तत्तत्प्राच्यामङ्गणं भवेत्
जयन्ताद्यन्तरिक्षान्तमङ्गणं कारयेद् भृशम्  १२१

अनुक्तं पूर्ववत् सर्वं श्येनांशादिक्रमेण च
स्थानीये तद्बहिर्भागे प्राच्यां दिश्यङ्गणं भवेत्  १२२

अङ्गणस्य तु विस्तारं दैर्घ्यद्विस्सप्तभागिकम्
द्वारगोपुरसंयुक्तं दुर्गाधामसमन्वितम्  १२३

महामहानसं तस्य प्राग्दक्षिणगतं भवेत्
तत्र कर्मान्तवत्सानां लेखनानां तु कर्मिणाम् १२४

दक्षिणे चाष्टभागे तु चैवाङ्गणमहान्तरम्
अश्वलीलार्थकं वाऽथ गजलीलार्थकं तु यत् १२५

तत्रैव तुङ्गकूटं स्यान्निर्ऋतौ नृपमन्दिरम्
खलूरिं तद्बहिर्भागे तद्बहिर्योषितां गृहम् १२६

वरुणे नृपवामे स्याद् योषितां सङ्करालयम्
जलक्रीडा सभा वाऽथ मालिका वासमन्दिरम् १२७

वायुभागे तु वापी स्याद् विहाराश्रमभूमिकम्
सोमभागे तुलाभारं हेमगर्भं तु तत्परे १२८

ईददेशे शिवावासं युक्त्या तत्र प्रयोजयेत्
तद्बहिर्नगरं वाऽथ शिबिरं पूर्ववत् क्रमात् १२९

एतत्सौबलमित्युक्तं नाम्ना राजेन्द्रमन्दिरम् १२९-२

अधिराज्ञां प्रतिभवनं वक्ष्ये शेषकेन संक्षिप्य
आत्तविशालायामे तत्रोभयचण्डते तु मध्यपदे १३०

ब्रह्मासनमथवास्मिन्नभिषेकार्हसभासु मण्डपकम्
तदपरभागे भवनं तेन सहैवेषुसप्तनवनलकम् १३१

पृष्ठे तद्द्विकपार्श्वे चाङ्गणयुक्ता खलूरिकांशेन
भोजनभोज्यालयका नृपतेर्वाञ्छा वशादबहिः १३२

तत्प्रागुत्तरकोणे मज्जनशाला च देवगृहम्
पुरतोऽङ्गणमुरुविपुलायामोपेतं नवांशेन १३३

प्रागिव तत्र खलूरी कर्तव्या मध्यदेशयुता
द्वारं द्वित्रितलाढ्यं तस्मिन् भेरी निधातव्या १३४

मण्डपमुखमिह भवनं पार्श्वे पोतस्य पार्श्वकर्तव्या
यद्यदद्वरे प्रयोगिके नृपतेः १३५

त्रिद्धिकपार्श्वेऽङ्गणके गोलादीनां विहारस्था
प्रागुत्तरदिशि कोणे भवनं स्यान्मूलकोशगृहम् १३६

तदपरभागे वस्त्रप्रभृतीनामालयस्थलं कुर्यात्
द्वारस्योत्तरपार्श्वे पानीयोष्णोदकालयं कुर्यात् १३७

कुर्यात् पचनालयकं सर्वद्रव्यालयं तु तत्रैव
द्वारस्य दक्षिणादिशि तत्राधिवासकं कुर्यात् १३८

तद्दक्षिणदिशि गन्धप्रभृतीनामालयं कुर्यात्
प्राग्दक्षिणगतकोणे भवनं स्यान्मूलकोशगृहम् १३९

राक्षसभागे तत्तु पश्चिमभागे द्विपेन्द्रमन्दिरकम्
तत्परदक्षिणकोणे शैवस्थानं सरत्नहेमगृहम् १४०

तत्प्रत्यगुदक्कोणे दानाध्ययनार्थकालयं कुर्यात्
प्रायः प्रयोगद्वारं --- तु नीचं तत् १४१

द्वारस्योभयपार्श्वे सारद्रव्यालयं तु कूटगृहम्
तत्रैव हस्तिशाला सर्वौषधि शस्त्रशाला स्यात् १४२

अन्यत्सर्वं नृपतेरिच्छावशतः प्रकर्तव्यम् १४२-२

अथ नृपेशगृहं च मुखाङ्गणं परियुतं हि भवेन्मुखमण्डपम्
अपि च भोगगृहं तु निवारणं नृपतिवाञ्छतिगृहा --- १४३

तद्दक्षिणतः पार्श्वे द्विःषट्पदके महाङ्गणं दीर्घ्यम्
तस्मिन् पश्चिमभागे मण्डपमथ मालिका वाऽथ १४४

शाला तदुभयपार्श्वेऽप्यभितः स्नानं च मण्डपं च स्यात्
अङ्गणकदक्षिणके सर्वद्रव्यालयं तदेव स्यात् १४५

वेशनपरिघामिण्ठककूटशालाविचित्रितं पुरतः
पुरतो भवनाङ्गणयोर्द्विपार्श्वभागतः परितः १४६

अपरो स्त्री वासो वा साङ्गणकं मालिकाभिधा पङ्क्तिः
भवनस्योत्तरपार्श्वे तत्र महिष्यालयं तु तत्तुङ्गम् १४७

भागं तत्त्रिकपार्श्वं राज्ञां च मालिकापङ्क्ति
तत्रैव कन्यकानां वासं वसुधात्र कुब्जकादीनाम् १४८

एकद्वित्रिभिरंशैर्दक्षिणतश्चोत्तरक्रमशः
तत्रोद्यानविशालं सालं कुर्यात् तु तत्र बहिरेव १४९

तत्रैवोत्तरभागे यत्र युता सम्मता जलक्रीडा
तत्र च सलिलावासं स्याद् नृपतेर्दीर्घिका चैव १५०

अपरे नृपतेश्च गृहं स्त्रीणां स्यादेव सङ्करा शाला
प्रागुत्तरदिशि बाह्ये नवस्वेष्टदेवतादिगृहम् १५१

तत्राग्रायणशाला पुष्पोद्यानानि कूपं स्यात्
प्राच्यां तु महाङ्गणकं त्रिंशद्भागैर्विधातव्यम् १५२

समहेन्द्रद्वारं तत् त्रितलं वा गोपुरं चतुःस्थलकम्
--- जासरस्वती -- सद्मान्येतानि द्वारदक्षिणतः १५३

अभ्यन्तरमुखयुक्तान्येकद्वित्रयतुर्य भौमानि
तत्प्राचि शङ्खभेरिप्रभृतीनामालयं तु स्यात् १५४

तद्दक्षिणतो दभ्रं महानसं सर्वरक्षयुतम्
अङ्गणदक्षिणभागे द्वारं स्यादेव द्वित्रितलसहितम् १५५

द्वारस्योभयपार्श्वे लेखकयोस्तत् खलूरी स्यात्
अङ्गणकोत्तरपार्श्वे कर्तव्या चैव दभ्रका च सभा १५६

दक्षिणमुखगतसहिता सर्वविचित्रा मनोहरा तुङ्गा
तदपरभागे पूर्वांशे स्थानं तु गीतकादिसभा १५७

अन्यत्सर्वं नृपतेरिच्छावशतः प्रकर्तव्यम् १५७-२

वेश्मावधौ विहिततुङ्गविशालमूलं
सालं शिलाभिरथ चेष्टकया प्रयोज्यम्
तद्बाह्यतः परिखयान्वितमिष्टकाद्य-
ैर्युक्तं जयङ्गमिति वेश्म वरं हि नाम्ना १५८

आवाहनोद्वाहनतोयकर्दर्भैषैर्जलूकैरनेकाब्धिसर्पकैः
पद्मारिभूकरटकमत्स्यकच्छपैः कुलीरशङ्खैः परिखा समन्विता १५९

वासार्हकालम्बनकूटसंयुता जालैर्लताभिः परिपूर्णपत्रिका
अभ्यन्तरप्राप्तनतोन्नतान्विता छिद्रान्विता भित्तिरनेकयन्त्रका १६०

एवं दुर्गे राजवेश्मानि कुर्याद् बाह्येऽबाह्येऽभ्यन्तरे तत्क्रमेण
सर्वे रक्ष्या भूपतीनां जनानां तस्मात् तस्या बाह्यतः षड्बलं तत् १६१

स्थानीयमाहुतं वै परमं यात्रामणिस्तथा विजयः
नगरं चतुर्विधं हि प्रोक्तं तज्ज्ञैर्नरेन्द्राणाम् १६२

तत्कुलमूलनृपेशैर्जनपदमध्येऽभ्रंस्थितस्थानम्
सतृणजलोर्वीगर्भं नगरं स्थानीयमिति कथितम् १६३

प्रभुमन्त्रोत्साहाख्यैर्युक्तं शक्तित्रयैर्वरावनिपैः
तृणभूजलगर्भयुतं नद्यावारादियुक्तं च  १६४

तन्यान्न जातु रिक्तं चागममित्युच्यते परैर्नगरम्
आवन्यापकयुक्तं सतृणं संग्रामयात्रके विहितम्  १६५

संग्रामं तदभीष्टं विजये युक्त्याणितद्गर्भम्
गर्भत्रयैरुपेतं विजयमिति प्रोच्यते प्रज्ञैः  १६६

महति वेश्मनि वान्वितकार्मुकैर्भवनमत्र विगृह्य ततः परम्
परिवृतं सकलं हि यथापुरा भवति शेषमशेष बलार्थदम्  १६७

त्रिहस्ताद्यर्धहस्तेन वृद्ध्या पञ्चकरान्तका
पञ्चैव भक्तयस्ताभिर्हस्तिशाला विधीयते  १६८

षरणवेति चतुस्सप्तत्रिपञ्चैरिति कीर्तिताः
भक्त्यस्त्रिविधा शाला विस्तारायामतः क्रमात्  १६९

अल्पत्वे तु महत्वे तु यथायोग्यं तथाचरेत्
मुखशालौकभक्त्या तु मध्ये विस्तारनिर्गता  १७०

शयनस्थानकं भक्त्या दक्षिणे प्रविधीयते
राजादनो मधूकश्च खदिरः खादिरस्तथा  १७१

तिन्त्रिणी चार्जुनश्चैव स्तम्बकं पिशितः शमी
क्षीरिणी पद्मकाद्यास्ते शालास्तम्भा गजस्य च  १७२

सप्ताष्टनवहस्तोच्चमवगाहं विहाय च
विस्तारस्तु विशालात्स्यादवगाहो यथाबलम्  १७३

शालास्तम्भा इमे प्रोक्ता विटपाभशिखान्विताः
सुवृत्तो हस्तिनः स्तम्भस्त्वेकहस्तविशालतः  १७४

त्रिपादोनार्धहस्तो वा विस्तारं त्रिविधं स्मृतम्
चन्द्रभागेऽष्टभागेन हीनाग्रतारकान्वितम्  १७५

शालाव्यासे तु पञ्चांशं नीत्वा पृष्ठे त्रियंशकम्
आपादं षोडशांशे तु वामेऽष्टांशव्यपोहितम्  १७६

स्थापयेत् तु तदलानान् पूर्वोक्तांश्च समन्वितम्
अनुपादार्धमानेन भित्त्युत्सेधो विधीयते  १७७

तदूर्ध्वे कटकच्छाद्यं घाटनोद्घाटनक्षमम्
वितस्तिगोस्तनं पश्चात् स्थापयेद् बहिराननम्  १७८

कारयेद्धस्तिमानेन फलकप्रस्तरं तलम्
शिलाभिर्वेष्टकाभिर्वा प्रस्तरं नैव कारयेत्  १७९

मूत्रद्वारयुतं लब्धद्वारयुक्त्या क्रमान्वितम्
अन्यत्सर्वं यथायुक्ति तथा कुर्याद् विचक्षणः  १८०

नवाष्टसप्तषट्पञ्चहस्ते पञ्चविसारिणि
त्रयभक्त्याद्यैकविंशद्भक्त्यान्तायाममीरितम्  १८१

चतुर्मुखचतुश्शालाः सप्रग्रीवाश्च शालकाः
दशद्वादशहस्तैर्वा स्तम्भ व्यासं प्रकीर्तितम्  १८२

त्रिचतु अञ्चषड्ढस्तैः कुडयोत्सेधं विधीयते
अभिन्नानां तु भिन्नानां भित्तिबन्धं यथेष्टतः  १८३

नेत्रभित्तौ च पृष्ठे च जालकं स्याद् गृहे गृहे
गृहान्ते कर्णधारा स्यात्तददर्भा वयोचिताः  १८४

अयुग्मवंशविस्तीर्णैः फलकैः प्रस्तरं तलम्
मूत्रच्छिद्रसमायुक्तं सारदारुमर्दृढम्  १८५

प्रत्येकं तुरगस्थानमेकभक्तिस्ववेशनम्
सारदारुमयं कीलं द्विसप्ताङ्गुलदैर्घ्यकम्  १८६

द्वित्र्यङ्गुलं तु विस्तारं सूचिकाग्रसमन्वितम्
पश्चाद् बन्धोऽग्रबन्धे तु योजयेद् दृढखातवत्  १८७

मयूरवानरादीनामालयं शुकपञ्जरम्
चित्रगोयुग्मगोवत्सपानधान्यधनालयम्  १८८

वस्त्ररत्नायुधद्यूतकर्मान्तावरणालयम्
दानभोजनशाला च योगशाला सदक्षिणा  १८९

दक्षिणं पञ्जरावासं यथास्थानं प्रयोजयेत्
उद्याने चापि वाःस्थाने स्थानमण्डपमिष्यते  १९०

कूटागारं तु वा वृत्तशाला या वृषभस्य तु  १९०-२

उत्तङ्गकुड्या नृपमन्त्रशाला पूर्वापरायामयुता मनोज्ञा
सभा च पादावृतकुड्यहीनातिदूरतः प्रेक्षणकर्मयोग्या  १९१

कूटागारं तु वा तस्मिंस्ततः पश्चिमतो दिशि
राज्ञां सिंहासनं युक्त्या प्राङ्मुखं कल्पिते यथा  १९२

तत्पूर्वदक्षिणे भागे मन्त्रिणां चासनं भवेत्
दूतस्य प्रागुदग्भागे प्रशास्तासनमुत्तरे  १९३

सेनापतेस्तद्दक्षिण्ये सर्वं नालिसमान्तरम्
पञ्चबन्धैकाङ्गुलीका मनोज्ञा मन्त्रनालिका  १९४

मात्रेणैकेन सुषिरा मुकुलाग्रद्वयान्विता
व्यसायामे तु पञ्चांशषडंशैकांशद्व्यंशकैः  १९५

मध्येऽङ्गणं तदावृत्तं स्तनमात्रोच्चभित्तिकम्
वृत्तोपलं तु तन्मध्ये प्रागुदग्जलप्रात्रकम् १९६

केशद्मालनपर्यङ्कं तद्दक्षिणगतं भवेत्
प्रागुदग्द्वारसंयुक्ता तथ मण्डपमालिका १९७

प्रासाधिकासनं मित्रे सुदृशां स्थानमण्डपम्
पञ्चादि पञ्चकान्तं वा व्यासं तत्रोजसंखया १९८

सभामण्डपशालानां सामान्यमिष्टदैर्घ्यकम्
पञ्चादशकरव्यासं त्रिसप्तारत्निदर्धकम् १९९

सैकद्वादशहस्तान्तं चूल्यन्तादिमनोहरम्
शालाभिषेकयोग्या सा कर्तव्या प्रागिवानना २००

तदङ्गमध्यमे रङ्गसंयुक्ता च सभा भवेत्
मण्डपं दक्षिणे राज्ञां तदुदीच्यां दिशि क्रमात् २०१

पट्टाभिषेक संवासं धामं तत्र प्रयोजएत्
पञ्चसप्तनवा रत्निव्यासतारद्विवैदिकम् २०२

त्रिचतुष्पञ्चभागं वा वेदिकोदयमीरितम्
वेदिकोदयपादोच्चं स्वव्याससममिष्यते २०३

अन्तःस्तम्भसमायुक्तं त्यक्तमध्यस्थपादकम्
द्विषड्भिरष्टमात्रं तु त्रिष्षडङ्घ्रिविशालकम् २०४

एकभक्त्यावृतं तत्र जालं तद्वद्बहिष्प्रभम्
तुलाभारार्हकं कूटं मण्डपं वा प्रभा भवेत् २०५

त्रिहस्तं तोरणस्तम्भदैर्ध्यं व्यासं दशाङ्गुलम्
नवाष्टसप्तमात्रं वा पृष्ठभागशिखान्वितम् २०६

वस्तुमध्ये निधातव्यं दक्षिणोत्तरगं यथा
तोरणान्तरमुत्सेधं सममेव विधीयते २०७

निर्विष्टविष्टकं मध्यवक्रतुण्डसमन्वितम्
पूर्वापरायतं भर्तृतुलान्तादचलं चरेत् २०८

तुलान्तरकराराणां महाराजस्य योग्यताम्
कीलितं वितलं मद्ये कुण्डलं सारदारुजम् २०९

योजयेद् वक्रतुण्डेन यथाबलसमन्वितम्
त्यक्त्वा तु पुंमुखात् षण्डादेवं तु फलकासनम् २१०

तत्समाङ्गमितालम्बिशृङ्खलाबलसंयुतम्
बकतुण्डद्वयं द्विद्विभूतं यत्नेन योजयेत् २११

वस्तुनश्च चतुर्दिक्षु प्राङ्मुखस्य च तोरणम्
स्तम्भं विष्टं तुलामात्रं कुर्यात् साराङ्घ्रिपैः शुभैः २१२

वस्तुमध्यगतं बाह्ये परितस्तत् प्रपा भवेत्
तत्समं परितश्चापि तद्बाह्ये योजयेद् बुधः २१३

औदुम्बरवटाश्वत्थन्यग्रोधास्तोरणं भवेत्
पीतं रक्तं तथा श्वेतं नीलं कुर्याद् ध्वजं क्रमात् २१४

तुला समं तत् समुपेत्य भूपतिः सुखं समास्साममरेन्द्रदिङ्मुखम्
समीक्ष्य राशिं निजहेमसञ्चयं विराजमानो धनदो यथा भुवि २१५

हेमगर्भयुतं सप्तनवरत्न्यापि भित्तिकम्
व्यासेन चतरश्रा सा व्यासतुल्योच्छ्रिता तलात् २१६

दशद्वादशमात्रैर्वा स्तम्भव्यासं प्रकीर्तितम्
वृत्तो वा चतुरश्रो वा चावगाहेद् यथाबलम् २१७

त्रिहस्तावृतभित्तिः स्याद् दण्डोत्सेधं स्ववेदिका
स्तम्भाग्रस्थोऽन्तराविष्टद्व्यष्टद्व्यविभूषिता २१८

लुपारूढाग्रविस्तारं समोत्सेधाः प्रशंसिताः
सप्तहस्तद्विहस्तादिव्यासोत्सेधेन वेदिका २१९

पञ्चहस्तद्विहस्तेन व्यासोत्सेधेन वा भवेत्
सभामध्ये निधातव्या तन्मध्ये चावटक्रिया २२०

बहिर्जालककुड्यं स्यात् तद्बाह्ये च प्रभा भवेत्
सभा नीव्रसमुत्सेधा विशाला दण्डमानतः २२१

त्रयोविंशतिहस्तेन तद्बहिः परिखा भवेत्
चतुर्दिक्षु चतुर्द्वारं तोरणं क्षीरपादपैः २२२

सोपानं योग्यदेशे तु चतुर्दिशि विधीयते
द्वारतुल्योन्नतव्यासं निर्गमद्वारतोरणम् २२३

स्तम्भाग्रतोरणाविष्टकंसादिष्वष्टमङ्गलम्
चक्रवर्तिशिखोपेतं द्वारे द्वारे प्रयोजयेत् २२४

छत्रकेतुपताकाश्च भेरीश्रीकुम्भदीपिकाः
नन्द्यावर्तेन चाष्टौ तु सर्वेषामष्टमङ्गलम् २२५

द्वारद्वयोच्छ्रितं शालारक्षयवासं यथाबलम्
तद्बहिर्जनचारेण बाह्या रक्षा प्रकीर्तिता २२६

राजेच्छया कुमार्यास्तद्देव्याः कुल्याविमानकम्
मालिकान्ते च भूमौ वा योजनीयं मनोभवम् २२७

यत्रोचितं नृपतिचित्तवशाद् विमानं सारालिभोगभवनं च निवारणं च
कुड्यं गजाश्वनिलयं युवतीनिवासं कर्तव्यमाद्यनिखिलं नगरं च

युक्त्या २२८

इति मयमते वस्तुशास्त्रे राजवेश्मविधानं नाम एकोनत्रिंशोऽध्यायः

अथ त्रिंशोऽध्यायः

द्विजनृपवणिजां वा सद्मनां शूद्रकाणा-
मभिमुखविनिवेशद्वारतारं च तुङ्गम्
पृथगथ निजभेदं मण्डनं चापि नाम्ना
सुखमनुगतबुद्धिर्वस्तुवाक्यं मुनीनाम् १

त्रिवितस्तिविशालं स्याद् दैर्घ्यं सप्तवितस्तिकम्
विस्तारायामतस्तस्मात् षड्द्वादशकराग्रजैः २

वृद्ध्या त्रिपञ्चसैकेषुषड्वितस्त्यन्तकानि हि
पञ्चविंशतिमानानि द्वारतारोदयानि हि ३

तदाद्यं शयनीयस्य गृहस्य द्वादशैव हि
समावृतखलूरीणां तानि चोक्तानि पण्डितैः ४

नगरग्रामदुर्गाणां द्वादशोक्तानि वेश्मनाम्
विस्तारद्विगुणोत्सेधं षण्मात्रं साधिकं भवेत् ५

नवमात्राधिकं वाथ सर्वेषां समुदीरितम्
सषण्मात्रद्वितालं च सत्रिमात्रद्वितालकम् ६

द्वितालं क्षुद्रमानं च त्रिविधं परिपठ्यते
स्वव्यासद्विगुणोत्सेधं षण्मात्रं वा द्विमात्रकम् ७

अधिकं शुभदं चारं विप्रादीनां गृहे मतम्
स्तम्भायामाष्टभागे तु षडर्धं द्वारदैर्घ्यकम् ८

तदर्धे नन्दभागे तु सार्धाष्टांशा तु तत्ततिः ८-२

नीचमध्याद्यपि द्वारं भूमौ भूमौ विधीयते
व्यासद्विगुणतुङ्गं तु नेष्टद्वारं नृणां गृहे ९

स्तम्भायामाष्टभागोनं तुङ्गद्वारं सुरालये
नन्दपंक्त्यंशहीनं वा विस्तारं स्यात् तदर्धतः १०

पादपादौद्विशाद् भूमौ भूमावत्र विधीयते
सपादपादविस्तारः सार्धो वा योग विस्तरः ११

स्तम्भव्याससमो वाऽपि तदर्धबहुलं मतम्
त्रिपादं चोत्तराधस्ताद् प्रतीकान्तस्य वाजनम् १२

त्रिचतुष्पञ्चषड्भागे भागेन स्तम्भवैपुले
कवाटबहलं प्रोक्तं देवद्विजमहीभृताम् १३

द्विकवाटविशेषेण एक एव प्रकीर्तितः
सामन्तप्रमुखादीनां द्विकवाटं प्रशस्यते १४

सार्धवेदेषुपातलनन्दरुद्रकरान्वितैः
उच्चानि तानि तल्पानि वेश्माभ्यन्तरतोदयात् १५

गुल्फार्धविमलार्धं तु किञ्चित्तीव्रं यथाबलम्
वेश्माभ्यन्तरतल्पोच्चे त्रिचतुष्पञ्चभागिके १६

द्वित्रिवेदांशतुङ्गं तत्सरपं पूर्ववर्तिनि
युग्मे महत्तरेऽल्पे च दक्षिणस्थे कवाटके १७

विपुले चायते तस्मिंस्त्र्यंशे चञ्चांशके कृते
उपरिष्टादधस्तात् तु पार्श्वयोस्त्र्यंशमंशकम् १८

त्यक्त्वा शेषं प्रवेशेन यदावारं तदुच्यते
यथाबलं यथाशोभमयःपट्टैर्दृढीकृतम् १९

मध्ये महत्तरे हीने योग्यव्यासकलान्वितम्
त्रिचतुष्पञ्चषण्मात्रं व्यासार्धं द्वित्रियंशकम् २०

सत्रिपादत्रिभागैश्च सभाजनविकासनम्
बहुली दशमात्रा स्याद्धस्तिहस्ताद्विशालि वा २१

वितस्तीनां विधातव्यं नेत्रं सामुद्गपाणिवत्
अयुग्मफलकं ग्राह्यं मध्यसन्धिविवर्जितम् २२

तल्पस्य भेषणी चैव मध्यं त्यक्त्वा समाहिते
कवाटयुगलोपेते यथाबलमभेषणी २३

अथ तल्पघनस्यार्धघना द्विगुणविस्तृताः
दण्डत्रिपञ्चसप्तैव नवैकादशसंख्यया २४

अश्वस्कन्ध नखाभास्तेऽश्वत्थपत्राग्रसन्निभाः
स्वस्तिकाभास्तु घटिका मिर्णका वाऽथवा मताः २५

श्रीमुखैर्वामदण्डैश्च पिञ्जरीगलकार्गलैः
क्षेपणैः सन्धिपत्रैश्च गुच्छगैर्वनकैस्तथा २६

गुल्मैरन्तर्गतैर्ग्राह्यैर्वालार्मध्यकुण्डलैः
विषाणपरिघाक्षुद्रदण्डैर्युक्तं कवाटकम् २७

इन्द्रकीलसमोपेतं सर्वचित्रमनोहरम्
अथवा सान्यलोहैश्च युक्त्या तत्र दृढीकृतम् २८

गुल्फे सन्धे ललाटे च शृङ्गायोमयपत्रकैः
बध्नीयात् सर्वयत्नेन यथाशोभं यथाबलम् २९

मुकुलानन्तरं पत्रत्रिनेत्रा सूचिकायता
योगोदयत्रिभागैकनिखातं वा यथाबलम् ३०

तल्पतीव्र समा तीव्रद्विगुणं विस्तृतान्विता
पद्मपत्रविचित्रा सा पट्टाङ्गस्कन्धपट्टिका ३१

प्रवेशदक्षिणे तल्पे स्थापितव्या मनोहरा
सार्गलं दक्षिणं योगं वामे योगं सतल्पकम् ३२

विदध्याद्वामहस्तेन तल्पं दक्षिणपाणिना
घटिकां रोपयेद् विद्वान् युग्मेऽयुग्मे करेण तु ३३

घाटनोद्घाटने तल्पे स्वस्वनादांशपूजिते
भेरीसमानशब्दं च हस्तिसिंहस्वरोपमम् ३४

वीणावेणुस्वरं चैव शस्तं कन्धरगर्जितम्
क्रोशनं कूजनं सर्वमन्यच्चापि विनिन्दितम् ३५

अधस्तादुपरिष्टात् तु प्रशस्तं घाटनं समम्
सच्छिद्रान्त्यार्गलत्वं च योगार्गलविघट्टनम् ३६

बन्धुक्षयकरं शत्रुपीडनोपद्रवं सदा
स्वयमेव पिधानं यत् स्वयमपावृतं तु तत् ३७

तद्द्वारं बन्धुनाशाय संपदां सापदं पदम्
वृक्षकर्णावधिस्थूणकूपविद्धं तथैव च ३८

देवायतनविद्धं च वीथिविद्धं तथैव च
वल्मीकभस्मविद्धं च सिराममार्दिविद्धकम् ३९

विषनाडीसमानं च फणिनां पदमेव च
स्थूलभावावनं रक्षद्वारं तल्लसितं वरैः ४०

गमनागमने गजोपरिष्टाद् द्विजघातावरणस्पृशा च

क्षयदं नृपतेर्हितं तु यत्सपदेऽवनतं विशेषतः ४१

फुल्लप्रवेशने भूपः सुचिरं जीवितं ध्रुवम्
परराज्याधिपत्यं च क्षीणत्वं नैव याति सः ४२

मध्यद्वारं तु देवानां द्विजानामवनीभृताम्
शेषाणामपि सर्वेषामुपमध्यं विधीयते ४३

द्वात्रिंशद्देवतांशेषु तेषु माहेन्द्रके पदे
राक्षसे पुष्पदन्ते च भल्लाटे च चतुर्ष्वपि ४४

तद्दिगीशानमाश्रित्य द्वारं कुर्यात् सुशोभनम्
अन्तर्द्वारबहिर्द्वारमेवं युञ्जीत बुद्धिमान् ४५

शेषद्वाराणि सर्वाणि सर्वदोषप्रदानि हि
ब्रह्मणोऽभिमुखं ब्रह्मापरावृत्तं निषिध्यते ४६

किमनेन प्रलापेन द्वारमन्यद् विगर्हितम्
विशालं व्यक्ततारं स्याद् व्यत्यस्तं रोगदायि तत् ४७

विवृते संवृते कार्ये स्थापिते थितिमद् भवेत्
उपरिष्टादधस्ताच्च व्यासायामं समं शुभम् ४८

अतिदूरे सशब्दत्वमथ धावकधावनम्
दोषदं सततं पत्युर्विपदामास्पदं भवेत् ४९

जयन्ते वितथे चैव सुग्रीवे मुख्यके पदे
जलद्वारं प्रयोक्तव्यं क्रमादन्यद् विवर्जितम् ५०

पर्जन्ये भृशभागे तु पूष्णि भृङ्गनृपे तथा
दौवारिके तु शोषांशे नगेऽदितिपदे क्रमात् ५१

उपद्वारं प्रयोक्तव्यं तत्सुरङ्गमिति स्मृतम्
एकद्वितलसंयुक्तं बहुरन्ध्रासमन्वितम् ५२

पादाधिष्ठानयोर्मानं नीत्वा रोषं यदुन्नतम्
तत्तु तत्रोपपीठोच्चे पूर्वोक्तद्वारतुङ्गकम् ५३

पुरतो वर्णकं गुह्यं सोपानं तल्पसंयुतम्
द्वारगोपुरगम्भीरं गृही योगं निधापयेत् ५४

सीमा सालं च सीमान्तं वेश्मादीनामुदीरितम्
इदानीं द्वारशोभादिगोपुरान्तं तु विस्तृतम् ५५

दैर्घ्यमुत्तुङ्गमानं तु सङ्क्षेपाद् वक्ष्यते क्रमात्
पञ्चसप्तत्रित्रिधैकादशत्रयोदशमानतः ५६

प्रथमावरणे द्वारशोभाव्यासास्तु पञ्चधा
त्रिपञ्चाद्यात्रयोविंशद् द्वारशाला करान्तकम् ५७

पञ्चविंशत्कराद्यावत्त्रयस्त्रिंशत्करान्तकम्
द्वारगोपुरविस्तारं पञ्चैव परिगीयते ५८

विस्तारत्रितयो द्व्यंशं पादमर्धं त्रिपादकम्
तत्समं वाधिकं तेषामायामाः स्युः पृथक् पृथक् ५९

उत्तुङ्गं तु तथैवेष्टमथवोन्नतमिष्यते
पञ्चांशेभ्यश्च सप्तांशे सप्तांशेभ्यो दशांशके ६०

स्वव्यासादधिकोत्सेधं पूर्वोक्तानामुदीरितम्
वक्ष्यते द्वारशोभादिपञ्चधरव्यालङ्कृतिक्रिया ६१

द्विचतुष्कषडायामं नालीगेहं तदर्धतः

शेषं तु भित्तिविष्कम्भं मध्ये द्वारं प्रयोजयेत् ६२

त्रिवर्गमण्डपाकारं नाम्ना तच्छ्रीकरं भवेत्
तदेव परितो भक्त्या महावारसमन्वितम् ६३

संवृतं विवृतं वाऽपि लाङ्गलाकारभित्तिकम्
वारोपरिष्टात्सोपानं प्रस्तलस्तुलसंवृतम् ६४

सकलं दुस्तकं कोष्ठं काननं मुखपट्टिका
मध्यपादसमायुक्तं नासिका मध्यमे भवेत् ६५

महावारेऽष्टनासं स्याद् ग्रामे तच्छीतमिष्यते
तदैककरं कोष्ठं काननं मुखपट्टिका ६६

श्रीभद्रमेतदुद्दिष्टं नाम्ना सर्वेषु पूजितम्
एकभूमि त्रिधा प्रोक्तं द्वितलं वक्ष्यतेऽधुना ६७

चतुष्षड्विस्तृतायामं द्वारतारं विशिष्यते
एकत्रिभागिकैर्व्यासायामं नालीगृहं तथा ६८

अर्धांशं परितः कुड्यं बहिर्वारमथांशकम्
तदर्धं तद्बहिः कुयत् त्र्यंशगोपानमञ्चकम् ६९

सोपपीठमधिष्ठानं स्तम्भादिपरिमण्डितम्
महावारेष्टनास्यङ्गं शिखरं कोष्ठकाकृति ७०

मुखेऽमुखे महानासा द्विभागविस्तृतान्विताः
सभद्रं वा विभद्रं वा भद्रं पादसमन्वितम् ७१

प्रादक्षिण्येन सोपानं महावाराधिरोहणम्
नाम्नेदं रतिकान्तं स्यात् सर्वेषां रतिवर्धनम् ७२

तदेव शिखरं दभ्रचतुर्णासिसमन्वितम्
यत् कान्तविजयं नाम्ना सर्वेषां कान्तिवर्धनम्  ७३

प्रहीणशिखराकारं हारोपेतं तदेव हि
वारे परीतनास्यङ्गमेतन्नाम्ना सुमङ्गलम्  ७४

एतद् द्वितलकं प्रोक्तं त्रितलं वक्ष्यतेऽधुना
चतुष्षड्विस्तृतायामं द्वारतारं विशिष्यताम्  ७५

द्वारस्य पार्श्वयोर्वासावंशेनांशेन योजितौ
तत्तत्परिवृतं कुड्यमर्धांशेन विधीयते  ७६

भागेन परितो वारं द्विकं चैवात्र नासिकम्
गेहद्वयं ससोपानं हारोपेतमुपर्यपि  ७७

वास्तलं च तयोर्मध्ये द्वारतारं विधीयते
द्वारहर्म्यमिदं नाम्ना मर्दलं राजमन्दिरे  ७८

षट्पङ्क्तिविस्तृतायामं द्वारतारं विधीयते
द्वारस्य पार्श्वयोर्वासमेकैकांशेन योजितम्  ७९

तत्तत्परिवृतं कुड्यमर्धभागेन सम्मतम्
बहिः परिवृतं वारमेकैकांशेन योजयेत्  ८०

जलस्थलि तयोर्मध्ये द्वारतारं विधीयते
बहिष्ठात्परितो वारं भागेनैव समन्वितम्  ८१

मासावृतं महावारं प्रत्येकं चेष्टनासिकम्
प्रहीणशिखराकारं हारोपेतमुपर्यपि  ८२

नासिका बाह्यवारे तु द्विसप्त परिकीर्तिताः

द्वारसोपानमार्गं च युक्त्या तत्र प्रयोजयेत् ८३

मात्रखण्डमिदं नाम्ना राज्ञामेतज्जयावहम्
व्यासायामे दशाष्टांशे द्वारतारं विशिष्यताम् ८४

नालीगृहं द्विभागेन गृहपिण्डस्तदंशके
अलिन्द्रमर्धभागेन परितोऽन्धारमंशकम् ८५

अंशेन परितोऽलिन्द्रं हारं भागेन योजयेत्
द्विभागं कूटविस्तारं शालायामं षडंशकम् ८६

विस्तारे चतुरंशेन कोष्ठकायाममिष्यते
हारा भागेन कर्तव्या चूलहर्म्यसमन्विता ८७

जलस्थलं तदेवाहुः कूटशालान्तरेऽपि वा
एवमादितलं प्रोक्तं द्वितले भागमुच्यते ८८

पूर्ववन्नालिगेहं च गृहपिण्डमलिन्द्रकम्
अर्धेन परितः पिण्डगोपानप्रस्तरान्वितम् ८९

उपरिष्टान्महावारमष्टनासिसमन्वितम्
शिखरं कोष्ठकाकारमायामार्धेन विस्तरम् ९०

मुखेऽमुखे महानासि द्विभागविस्तृतान्वितम्
उपर्युपरि वेशं च युक्त्या मध्याङ्घ्रिसंयुतम् ९१

प्रादक्षिण्येन सोपानमुपर्युपरि योजयेत्
सोपपीठमधिष्ठानं स्तम्भादिपरिमण्डितम् ९२

ऊहप्रत्यूहसंयुक्तं नाम्नेदं श्रीनिकेतनम्
त्रितलं त्रिविधं प्रोक्तं शुद्धमिश्रतयान्वितम् ९३

नानावातायनोपेतमन्तस्मालेषु सम्मतम्
अधुना सप्तभौमादि चतुर्भूमान्तमिष्यते ९४

द्विसप्ताष्टांशके व्यासाद् द्वारतारं विशिष्यताम्
नालिगेहं द्विषड्भागं व्यासायामसभित्तिकम् ९५

परितो द्व्यंशमानेनालीन्द्रं कुर्याच्चतुष्टयम्
हाराचतुष्टयं कुर्यादर्धांशेन समन्ततः ९६

तद्बहिस्त्वेकभागेन परितोऽलिन्द्रमिष्यते
हारभागं तु भागेन गृहपिण्डस्तदर्धतः ९७

हारभागेन कर्तव्यं पार्श्वयोः पञ्जरस्य तु
सप्रत्यङ्गसहामूलं भूमौ भूमावुपर्यपि ९८

त्रितले खण्डहर्म्यादिमण्डितं वाःस्थलन्वितम्
उपर्युपरि च ग्रीवे महावारचतुष्टयम् ९९

उपर्युपरि युक्त्याङ्घ्रिं योजयेद् द्वारमध्यमे
अयुग्मस्थूपिकोपेतशिरसाम्याङ्गपट्टिका १००

तोरणैर्जालकैः क्षुद्रनीडैः सम्यग् विचित्रितम्
तले तले महावारे युक्त्या नास्यङ्गसंयुतम् १०१

द्वारस्योभयपार्श्वे तु कूटशालान्तरे ततः
उपपीठादिरोहार्थं सोपानं चारमिष्यते १०२

सोपनाङ्गणकूटस्य त्रिखण्डं शृङ्गमण्डलम्
उपर्युपरि सोपानं युक्त्या तत्र प्रयोजयेत् १०३

भद्रकल्याणमित्युक्तं नाम्नेदं द्वारगोपुरम्

तदेव शिखरे मध्ये नासिका पार्श्वयोर्द्वयोः १०४

मुखेऽमुखे तु नास्यङ्गयुक्तं तस्य सुभद्रकम्
द्व्यंशं वारितलं गर्भगेहे तत्पार्श्वयोर्द्वयोः १०५

द्विभागं चतुरश्राभं चतुर्नास्यङ्गसौष्टिकम्
भद्रसुन्दरमित्युक्तं नाम्ना तत्तत एव हि १०६

द्विरष्टद्विनवांशेन व्यासे पार्श्वे नियोजयेत्
स्वव्यासांशं चतुर्भागेऽप्यधिकं स्यात्तदायतम् १०७

शेषं युक्त्या प्रकर्तव्यं शुद्धमिश्रतयान्वितम्
एवं सप्ततलं ज्ञात्वा नाम्ना तत् त्रिविधं भवेत् १०८

तदेवाधः स्थलं त्यक्त्वा षट्तलं यत्क्रमेण तु
सुबलं सुकुमारं च सुन्दरं चेति कीर्तितम् १०९

द्विसप्तविस्तारायामे द्वारतारं विशिष्यताम्
गृहपिण्डं च गेहं च पूर्ववत् परिकल्पयेत् ११०

हारालिन्द्रं तु पञ्चार्धार्धांशेन परितः क्रमात्
अलीन्द्रं बाह्यभित्तिं च भागेनांशेन योजयेत् १११

अङ्गणे सौष्ठिकद्व्यंशं शालायामं षडंशकम्
जलस्थलं त्रिभागेन कूटशालान्तरे विदुः ११२

विस्तारे वाःस्थलं द्व्यंशं महावारत्रयान्वितम्
शेषं पूर्ववदुद्दिष्टं पञ्चभूमं यथाक्रमम् ११३

श्रीच्छन्दं श्रीविशालं च विजयं चेति कीर्तितम्
नाम्नेदं त्रिविधं प्रोक्तं नानावयवशोभितम् ११४

तदेव व्यासव्यायामे द्व्यंशेन परिवर्जिते
महावारद्वयोपेतं कूटकोष्ठं च पूर्ववत्  ११५

ललितं चैव कल्याणं कोमलं च त्रिधा मतम्
नाम्ना चतुस्तलं चैव ग्रामादीनां च वेश्मनाम्  ११६

त्रिद्व्येकालीन्द्रयुक्तं वा सप्तभौमादिषु त्रिषु
शेषं कुड्ये प्रयोक्तव्यं त्रित्रिकैरपि कारयेत्  ११७

यथाबलं यथाशोभं तथा मण्डनमण्डितम्
स्तम्भायामं विशालं च प्रस्तरं पूर्ववद् भवेत्  ११८

ऊर्ध्वभूमेरधोभूमेरवधिः प्रतिरिष्यते
प्रवेशदक्षिणे गर्भमारूढे भित्तिके भवेत्  ११९

एकादिसप्तान्ततलानि युक्त्या त्रिसप्तभेदानि हितानि नाम्ना
प्रोक्तानि विप्रादिचतुष्टयानां मयेन वेशायतानि वासे  १२०

आद्यत्रयं सकलवर्णहितं तदेवैश्वर्योपयुक्तमनुजेषु विधीयते हि
ग्रामाग्रहारपुरपत्तनके द्वितीयं सर्वं नृपेश भवने विहितं सुराणाम्  १२१

इति मयमते वस्तुशास्त्रे द्वारविधानं नाम त्रिंशोऽध्यायः

## अथैकत्रिंशोऽध्यायः

## यानाधिकारः

अथ वक्ष्ये यानानां शयनानां लक्षणं क्रमशः
शिबिका च रथं यानं पर्यङ्कादीनि शयनानि  १

अथ शयने तज्जातान्यपि पीठाद्यासनानि ततः
पीठेति च शिखरेति मौण्डीति मया त्रिधा मता शिबिका  २

व्यासायामसमस्ता भेदाः सत्र्यंशशिखरिभित्तिवशात्

व्यासायामोत्सेधान्यधुना वक्ष्ये पृथक् पृथक् तासाम्  ३

व्यासं त्रिवितस्ति स्यादायामं पञ्चकैर्वितस्तिः स्यात्
अधमं त्रिवितस्तिः स्यान्मध्यं तस्मादङ्गुलाधिक्यम्  ४

तस्मात् त्र्यङ्गुलमधिकमुत्तममेतत्तु कथ्यते मुनिभिः
विपुलाध्यर्धायामं स्वस्वव्यासं च कर्णमात्रं वा  ५

व्यासार्धं भित्त्युच्चं श्रेष्ठं तस्मात् त्र्यङ्गुलक्षयतः
मध्यममधमं तस्मात् त्र्यङ्गुलहीनं त्रिधोत्तुङ्गम्  ६

व्यासायामोच्चवशात् त्रिविधोक्ता पैण्डिका शिबिका
सैकत्रिंशतिमात्रैः सप्तत्रिंशत् सपञ्चकं त्रिंशत्  ७

मात्रैरथवा विपुलं दैर्घ्योच्चं पूर्वमेव तत्कार्यम्
उत्कृष्टमध्यमाधमविपुलं पञ्चार्धयुगलमिति मात्रैः  ८

निजविपुलार्धोत्सेधं कर्तव्यं सम्यगीषिकायामम्
पञ्चचतुस्त्र्यङ्गुलिभिर्विपुलं सार्धं तु तत्तीव्रम्  ९

सक्षुद्रपट्टिकाथ वाजननिम्नाब्जकं प्रयुतम्
द्व्यर्धं द्विमात्रसार्धैकाङ्गुलविपुलं च हस्तं स्यात्  १०

व्यासं त्रिपादमर्धं तयोस्तु मध्यं च तत्तुङ्गम्
गोलार्धाकृतिकं वा छत्राभं वाऽथ वेत्रभेदनिभम्  ११

हस्तेषिकयोर्मध्ये षड्भागैः कम्पकानि चत्वारि
सार्धद्व्यङ्गुलविपुलं द्व्यङ्गुलमध्यार्धमात्रविस्तारम्  १२

अर्धं त्रिपादाङ्गुलकमुत्सेधं ह्येव कम्पकानां तु
अधरोर्ध्वे चैकांशाङ्गुलिकं फलकाभिरपि युक्तम्  १३

मध्यमकम्पं त्यक्त्वा युक्तिवशान्मध्यभित्तिमाने तु
मध्ये द्व्यंशे फलका नरनारीचक्रवाकशोभयुतम्  १४

वल्लीचतुष्पदाद्यैः संयुक्ता नाटकादिकैरपि च
हस्ताधिकयोर्मध्ये व्यालस्थानं विधीयतेऽग्रे तु  १५

स्वव्यासकर्णमात्रमुदितं निर्गमनमुष्टिबन्धं स्यात्
तदधो वाङ्घ्रियुतं तदधोभागेन तुङ्गमेव स्यात्  १६

तत्समनिर्गमयुक्तं स्वव्यासार्धं तु कम्पकं पुरतः
नक्रमुखेन तु युक्तं लोहेनैवाथवेभदन्तेन  १७

भक्त्या विपुला दैर्घ्यशरसप्तकनन्दकाख्यदशरुद्राः
कम्पव्यासघनाभ्यां स्तम्भव्यासं तु बाहल्यम्  १८

दैर्घ्याधिकाग्रमूले कर्तव्या युक्तिबलवशात् तु शिखा
आत्तविशालं ह्रस्वैधितयोर्मूले तदग्रे च  १९

पञ्च चतुष्टयमात्रं निर्गमनं पद्मचित्रयुतम्
तत्कमलाग्रहस्तं च तन्मानं वा समानकर्णं वा  २०

ह्रस्वैधितोपरिष्टाद् विपुलं कम्पं च वा फलकम्
एकांशेन समोच्चं शोभार्थं वा फलार्थं स्यात्  २१

तत्रैव ह्रस्वपादैर्गुलिकाभिः शोभितं तदुक्त्यापि
अथवा मुखतो द्वारं पञ्चैवांशं गुणांशकं वा तु  २२

त्रिचतुर्मात्रविशालं षट्सप्ताष्टाङ्गुलोत्सेधम्
पादं यत्कुम्भं तदवलग्नं हीरकं सुवृत्तं च  २३

गुल्फायामसुपट्टैर्मतिभिः पट्टैस्तु कीलकं कुर्यात्

एवं प्रोक्ता शिबिका पैठिका नाम चित्राङ्गा  २४

स्वव्याससमेन तूत्सेधः स्वव्यासार्धं त्रिभागभित्तिश्च
पादसमेता शिखरोपेता सा शेखरीति संप्रोक्ता  २५

मौराडी मुराडाकारा शिखराभैरेव भित्तिभिर्युक्ता
व्याससमोत्सेधयुता मराडपमिव मराडपोदिताभिमता  २६

पान्मध्यतस्तु मानं तासां सम्यक् प्रयोक्तव्यम्
शाकः कालस्तिमिशः पनसो निम्बार्जुनौ मधूकश्च  २७

याने शयने चैते प्रोक्ता वृद्धाः पुराणैस्तु  २७-२

श्रीनतसुखमधिरुह्य यानं श्रीमत्तत्प्रकटनिजात्मा स्यात्
तद्यानं तदपि शिबिकालक्षणयुक्तं तत्संपदे सहर्ध्या  २८

द्विचक्रबाह्ये विस्तारं षट्सप्ताष्टवितस्तियुक्
चक्रनाभिद्वयान्ताभिगतमक्षोत्तरस्य तु  २९

हारबाह्यं च तावत् स्याद् विस्तारार्धाधिकायतम्
चतुस्त्रिद्व्यङ्गुलोत्सेधं बाहल्यं पञ्चभारकम्  ३०

त्रिसप्तनवधा तत्र व्यासोत्सेधाश्च पूर्ववत्
आयामानुगतं तिर्यक् तुल्यकम्पं दृढीकृतम्  ३१

मध्यभारोपरि तुलामध्यनिर्गमनाग्रतः
ललाटात्तु त्रिहस्तादि तदग्रं कुटिलकृति  ३२

मध्यभार इति प्रोक्तं कूपरो युगभागभाक्
भारोपर्यङ्गुलघनफलकाप्रस्तरो भवेत्  ३३

अक्षमक्षोत्तरं चक्रपट्टं भारोपधानकम्

उत्सेधं पञ्चषट्सप्तबाहल्यं द्वित्रिमात्रकम्  ३४

अष्टादशाङ्गुलं दैर्घ्यं पार्श्वे भारोपधानकम्
पोतिकाकारसंयुक्तमयःपट्टैर्दृढीकृतम्  ३५

अक्षोर्ध्वोत्तरबाहल्यतुल्यच्छिद्रात्ममध्यमम्
तदधस्त्वक्षरक्षार्थं पार्श्वयोर्बन्धनं भवेत्  ३६

उपधानविधानं तु तुल्यव्यासार्धतीव्रकम्
अक्षस्या वधि दैर्घ्यं स्याद् दारु चेत् चतुरश्रकम्  ३७

अयः पट्टैश्च कीलैश्च स्वशिखाभिर्दृढीकृतम्
अक्षान्तेऽक्षोत्तरं बन्धं दारुकीलैः प्रयोजयेत्  ३८

अक्षोत्तरसमं चक्रं विस्तारं परिकीर्तितम्
नाभिर्दशाङ्गुलोत्सेधा वितस्त्यायामविस्तृता  ३९

तत्पट्टनाभिमध्ये तु द्वात्रिंशद्वा त्रिरष्टकम्
अष्टाष्टकं तु वा तत्र युक्त्या संख्यासमन्वितम्  ४०

अरारकर्णमूलाग्रं त्र्यङ्गुलं सार्धमात्रकम्
मूले क्षीणं यवाकारं मूलेऽग्रे शिखयान्वितम्  ४१

रोहारोहघने चैव अक्षान्तरं तथाम्बकम्
भारस्योदयं पट्टैश्च कीलकैः पट्टबन्धकैः  ४२

योग्यं च द्व्यंशपादांशैरयः पट्टैश्च बन्धयेत्
तत्स्थाने चोपपीठे च गुह्यं युक्तिवशान्नयेत्  ४३

सार्धबद्धकरं पादोत्सेधं चक्रार्धमिष्यते
पादोत्सेधद्विभागैकं भागं स्याच्चूलिकोच्छ्रयम्  ४४

अग्रे पार्श्वे तले वा तु गुलिका पट्टिकान्तरे
पृष्ठे पञ्चाङ्गुलोत्सेधं मुखपट्टिकयावृतम् ४५

अन्तरे कर्णपादस्य मुकुलाग्रोत्तरान्तिका
भारो भारोपधानं च अक्षमञ्चोत्तरं तथा ४६

कूबरः कूबरस्याग्रो द्वयपट्टैश्च कीलकैः
तत्तद्योगैश्च तत्स्थाने बन्धनाच्च भवेदपि ४७

अक्षमञ्चोत्तरं मध्ये दारुकीलं प्रयोजयेत्
सर्वराजाधि पत्ये च राजयुद्धे महोत्सवे ४८

मङ्गले देवपूजायां सोमयागे तथैव च
इत्येवं कर्मणादिष्टं रथारोहणमिष्यते ४९

वासद्वित्रिगुणायामं चक्रं तारसमन्वितम्
सप्ततालं तु वा दैर्घ्यं त्रिचतुर्मात्रविस्तृतम् ५०

स्वस्वपादवशात् तत्र पूर्ववच्चोत्तरादिकम्
हारोपर्यन्तरोपेतं ह्रस्वपादान्तरान्वितम् ५१

चतुष्षष्टिकसंख्याभिः स्तम्भयुक्तसमन्वितम्
षट्सार्धपञ्चपञ्चैव तालेनचरणोदयम् ५२

एकद्वित्रितलोपेतमेकं वाऽथ चतुर्मुखम्
मण्डपाकारसंयुक्तं शालाकारशिरः क्रियम् ५३

त्रिचतुष्पञ्चषट्सप्त हस्तं चक्रान्तमिष्यते
चक्रोत्सेधं चतुष्पञ्चषट्सप्ताष्टेष्टतीव्रकम् ५४

अक्षमञ्चोत्तरं चैव भारोपधानकं यथा

इष्टेष्टविपुलोत्तुङ्गैर्दारुकीलैर्दृढीकृतम्  ५५

एकद्वित्रितलोपेतं प्रासादवदलङ्कृतम्
षोडशस्तम्भसंयुक्तं दिग्दिक्षु मुखभद्रकम्  ५६

सर्वालङ्कारसंयुक्तं रङ्गं तद्योजयेद् दृढम्
तथैव शिल्पि मानीय योजनीयं विचक्षणैः  ५७

पादुकं मिथुनांशकपद्मकं लेखिते चरणांशकमूर्तिकम्
तुर्यकादिकृतपट्टिककल्पितं पञ्चबोधिहृसकुड्मलमेव च ५८

द्वित्रिपादकरनन्दवर्गकैर्विप्रभागमिति गण्यमिष्यते  ५९

पद्मं तु पट्टीसहकर्णप्रस्तरं व्यालं तु नक्रक्रममेव शोभितम्
कर्णांशपद्मं जगति प्रतिष्ठां नराप्रवेशं कुमुदं तु भागम्  ६०

वस्वंशकर्णं गुणभागपट्टी शिवांशवेदी सकलं धरातलम्
शरण्यपद्मं च तु कर्णवेदिका कर्णेन वेदी गलपक्षमंशम्  ६१

प्रस्तरांशमुनिदेवसानकं नाटचताल उपधानकल्पितम्  ६१-२

इति मयमते वस्तुशास्त्रे यानाधिकारो नाम एकत्रिंशोऽध्यायः

## अथ द्वात्रिंशोऽध्यायः

त्रिवितस्तिकृतव्यासं पञ्चवितस्त्यायतं च शयनं स्यात्
विस्तारायामाभ्यां त्रिःपञ्चममात्रमधिकं ज्येष्ठम्  १

चतुरङ्गुलेन पञ्चाङ्गुल्यैर्वा व्यासयुक्तमिषिकायाः
व्यासार्धं बाहल्यं व्यासत्र्यंशेन मध्यपट्टं स्यात्  २

व्यासत्रिचतुर्भागं बाहल्यं चैषिकायास्तु
पृष्ठललाटेऽधिकयोर्निर्गमनं व्यास एव कर्णे वा  ३

पार्श्वेऽधिकाग्रमूले मध्यशिखा वा यथाबलं कुर्यात्
एवं निर्गमनं स्यात् पादाधिकयोर्यथाबलं कुर्यात् ४

श्रेष्ठकपादोद्गमनं सार्धवितस्तिर्वितस्तिरथ हीनम्
स्वोद्गमचतुरंशो वा त्र्यंशो वा पादमेव विष्कम्भम् ५

पादशयनेऽभिहिता ऋजुपादव्याघ्रपादमृगपादाः
ह्रस्वेऽधिकविद्धशिखा स्वनामसदृशप्रकाराः स्युः ६

फलका पर्यङ्को वा पट्टविचित्राऽपि वाऽधिका कार्या
शयनविशालव्यासा तुङ्गं पादपट्टिकोपेता ७

तोरणमूर्ध्वोपमिता कुण्डलकीलार्धसार्धबकतुण्डा
पर्यङ्कशिबिका कार्या विजयीविप्रादिप्रोष्टना किञ्चित् ८

पूर्वशिरः पर्यङ्कं दक्षिणमुखमनुवशमपि
दक्षिणतः शिरसं वा पश्चिममुखमन्यदिङ्नेष्टम् ९

व्याघ्रमृगपादशयनं द्विजनृपयोः शेषयोस्तु भृशशेषम्
नवसप्तपञ्चविंशत्यङ्गुलविस्तारतः समोत्सेधम् १०

उत्कृष्टमध्यमाधमासनमृजुपादं शयनवत् कार्यम्
समचतुरश्रं पीठं ह्यासनमिति सायतं प्रोक्तम् ११

अष्टांशाधिकदैर्घ्यं द्विगुणायतमेव विशालं तु
सिंहेभभूतवृषयुग् देवानां विप्रनृपयोस्तु १२

सिंहेभयुक्तमेव तत्तन्नाम्नाभिधानं स्यात्
सोत्तरमब्ज कपोतमलिङ्गान्तरिताभिरभियुक्तम् १३

नानाचित्रविचित्रं द्युसदां राज्ञां च वक्ष्येऽथ

उपपीठयुक्तमेतद्युक्तेऽर्थे पद्मबन्धयुतमेतत्  १४

कर्णे मध्ये मध्ये स्तम्भमृगेन्द्रैर्विचित्रं स्यात्
तदुपरि तोरणयुक्तं सविचिकमथ हेमरत्नाढ्यम्  १५

सिंहासनमिदमुदितं मुनिभिर्यथाबलाङ्गसंयुक्तम्
एतद्व्यासं चासनफलकमपि द्विगुणदैर्घ्यकं पादम्  १६

पञ्चाङ्गुलान्तमुन्नतमुत्सेधार्थं तु वाजनं चोर्ध्वे
अपरार्धमुत्तरं स्यात् तावद्व्यासं तदन्तरं खातम्  १७

व्यासायामे मध्ये पञ्चांशैकांशमायतं च ततः
विष्टरमिष्टोत्तरमायतनं चोत्तरमन्यथाशान्तम्  १८

जात्युत्तमायतव्यासासनशयनी यथा तथा चेष्टाः
उक्तोत्सेधायामाः स्वस्वांशेनैव वर्धिता हीनाः  १९

आद्यं षडङ्गुलं स्याद् द्व्यङ्गुलवृद्ध्या करान्तमानं च
दशधा विस्तृतमुदितं चतुरङ्गुलविपुलमपि वदन्त्येके  २०

चतुरश्रमायताश्रं वृत्तं विपुलार्धमुत्तुङ्गम्
व्यासषडष्टांशं वा हरिचरणयुतं सकम्पवाजनकम्  २१

तदुपरि पद्मदलं स्यात् कर्णिकयालङ्कृतं यथाशोभम्
शोभनमिदमिदमुदितं सर्वं देवेषु पूजितं ह्येव  २२

नानाचित्रसमेतं सुगृहार्चनपीठमेवमिदमुदितम्
न्यग्रोधोदुम्बरवटपिप्पलबिल्वामलसारदारुमयम्  २३

ते सर्वे योग्याः स्युः पीठेऽस्मिन् सर्वसिद्धिकरणीये  २३-२

अष्टधनरश्मिरिभतुर्यग्रहवृद्ध्या भानुदिशि सर्पभसनन्दऋषिहारैः

आयव्ययगुह्यमुड्वाय्वंशमितिवारैः यानशयनविधिरथासनमिदं स्यात्
२४

इति मयमते वस्तुशास्त्रे शयनाधिकारो नाम द्वात्रिंशोऽध्यायः

अथ त्रयस्त्रिंशोऽध्ययः

निष्कलं सकलं मिश्रं लिङ्गं चेति त्रिधा मतम्
निष्कलं लिङ्गमित्युक्तं सकलं बेरमुच्यते १

मुखलिङ्गं तयोर्मिश्रं लिङ्गोच्चाकृतिसन्निभम्
बिम्बमूर्तिः शरीराभा विश्वमूर्तिस्वरूपकैः २

चिह्नदेहप्रतिच्छन्दप्रतिमाङ्कैस्तु नामभिः
दृश्यदेवः समाख्यातो निष्कलं वक्ष्यतेऽधुना ३

श्वेता रक्ता च पीता च विप्रादीनां हितासिता
एकवर्णा घना स्निग्धा शिला भूमिनिमग्नका ४

व्यासायामवती ग्राह्या यौवनातिमनोरमा
वातातपानलालीढा मृद्वी क्षाराम्बुसंश्रिता ५

दुःस्थानस्थानरूक्षा च या कर्मान्तरयोजिता
रेखाबिन्दुकलङ्काढ्या वृद्धा वक्रा च या शिला ६

सशर्करा विवर्णा च सत्रासायतनस्थिता
निःस्वना सदरीभेदा सगर्भा निन्दिता वरैः ७

एकवर्णा घना स्निग्धा मूलाग्रादार्जवान्विता
गजघण्टारवा या सा पुंशिलेति प्रकीर्तिता ८

स्थूलमूला कृशाग्रा या कांस्यतालसमध्वनिः

स्त्रीशिला कृशमूलाग्रा स्थूला षण्डेति निःस्वना ९

सकलं निष्कलं मिश्रं कुर्यात् पुंशिलया सुधीः
युञ्जीयात् स्त्रीशिलां सम्यङ् नारीबेरं च पिण्डिकाम् १०

षण्डोपलेन कर्तव्ये ब्रह्मकूर्म शिले तथा
नन्द्यावर्तशिला वाऽपि कर्तव्या तेन वर्त्मना ११

प्रसादतलकुड्यादि कर्म कुर्याद् विचक्षणः
सा शिला त्रिविधा बाला मध्यमा स्थविरेत्यपि १२

टङ्कघातादिमृद्वी या मन्दपक्वेष्टकोपमा
शिला बाला मता तज्ज्ञैः सर्वकर्मसु निन्दिता १३

स्निग्धा गम्भीरनिर्घोषा सुगन्धा शीतला मृदुः
निबिडावयवा तेजःसहिता यौवना शिला १४

मध्यमा स्त्रयोग्या स्यात् सर्वकर्मार्थसिद्धिदा
मत्स्यमण्डूकशकला रूक्षा वृद्धा शिलाशिवा १५

रेखाबिन्दुकलङ्काढ्या सा त्याज्या सर्वयत्नतः
छेदने तक्षणे यत्र मण्डलं दृश्यते यदि १६

सा शिला गर्भिणी विद्वांस्तां प्रयत्नेन वर्जयेत्
मुखमुद्धरणेऽधोंऽशमूर्ध्वंभागं शिरो विदुः १७

शिलामूलमवाक् प्रत्यगङ्गाग्रं प्रागुदग्दिशि
अग्रमूर्ध्वमधोमूलं पाषाणस्य स्थितस्य तु १८

नैर्ऋत्यैशानदेशाग्रा वह्न्यग्रा वह्निवायुगा
उत्तरायणमासे तु शुक्लपक्षे शुभोदये १९

प्रशस्तपक्षनक्षत्रे मुहूर्ते करणान्विते
गच्छेल्लिङ्गं समुद्दिश्य वनं चोपवनं गिरिम् २०

अथवा शुद्धदेशं तु भूमग्नोपलसंयुतम्
ऐन्द्राशायां तु सौम्यायामैशान्यां वा विशेषतः २१

निमित्तः शकुनैर्योग्यैः सह मङ्गलशब्दकैः
स्थापकः स्थपतिः कर्ता कृतकौतुकमङ्गलः २२

स्थापकः स्थपतिश्चैव सितवस्त्रपरिच्छदौ
श्वेतगन्धानुलेपौ तौ सितवस्त्रोतरीयकौ २३

सितपुष्ज्पशिरोयुक्तौ प्राप्तपञ्चाङ्गभूषणौ
गन्धैः पुष्पैश्च धूपैश्च मांसेन रुधिरेण च २४

पायसोदनमत्स्यैश्च भक्ष्यैश्चापि पृथग्विधैः
अर्चयेदीप्सितान् वृक्षानुपलान् वनदेवताः २५

भूतक्रूरबलिं दत्त्वा कर्मयोग्यां वरेच्छिलाम्
स्थपतिर्वरवेषाढ्यो मन्त्रयेत् प्राङ्मुखो वरः २६

अयं मन्त्रः
अपक्रामन्तु भूतानि देवताश्च सगुह्यकाः
युष्मभ्यं तु बलिर्भूयात् क्रूराश्च वनदेवताः २७

कर्मैतत् साधयिष्यामि क्रियतां वस्तुपर्ययः
एवमुक्त्वा नमस्कृत्य शिलाश्छेत्तुं समारभेत् २८

तत्रैव स्थापको युक्त्या जुहुयात् तदुदग्दिशि
हेमसूच्यष्ठीलाभ्यां तु शोधयेत् प्रथमं पुनः २९

तीक्ष्णशस्त्रेण महताप्यष्ठीलेन प्रहारयेत्
इष्टायामविशालाभ्यामधिकं ग्राह्य यत्नतः ३०

चतुरश्रसमं कृत्वा मुखभागं विचिन्त्य च
शुद्धिं कृत्वार्चयित्वा तु गन्धाद्यैर्विधिपूर्वकम् ३१

लिङ्गं वा पिण्डिकां बेरमौपलं वार्क्षमेव वा
वस्त्रैरावेष्टयित्वा तु रथे संस्थाप्य यत्नतः ३२

सर्वमङ्गलसंयुक्तमानीयात् कर्ममण्डपे
यथोक्तविधिना सम्यक् कुर्यादन्तरितेन च ३३

यथोक्तविधिना नैव लभ्यते यदि पण्डितः
गृहीत्वान्यत्र पूर्वोक्तविधिना तदुदग्दिशि ३४

नीत्वा तत्र खनित्वा तु शुभऋक्षमुहूर्तके
गृहीत्वा विधिवद्धुत्वा शुद्धिं कृत्वाम्भसा ततः ३५

गन्धाद्यैरर्चयित्वा तु सर्वमङ्गलघोषणैः
आनीयात्पूर्ववत्तत्र दिशां दोषैर्विमुच्यते ३६

लिङ्गमानाद् विमानं वा लिङ्गं वा हर्म्यमानतः
गर्भमध्ये तु सूत्रात् तु वामेऽर्चालिङ्गमेव वा ३७

स्थापयेत् किञ्चिदीशानमाश्रियित्वा विचक्षणः
त्रिःसप्तांशे कृते द्वारे ब्राह्मेंऽशं मध्यमं भवेत् ३८

कृत्वा षडंशकं तच्च वामे द्व्यंशं व्यपोह्य च
तदंशमग्रं नीत्वा तु प्रागुदग्गतसूत्रकम् ३९

तद् ब्रह्मसूत्रमित्युक्तं तत्सूत्रं शिवमध्यमम्

गर्भार्धमधमं श्रेष्टं पञ्चत्र्यंशं शिवायतम् ४०

भवन्ति नव लिङ्गानि तयोर्मध्येऽष्टभाजिते
श्रेष्ठमध्यकनिष्ठानि त्रित्रिभेदानि तानि हि ४१

नागरे नागरस्योक्तं मानं लिङ्गस्य मन्दिरे
विकारांशे तदायामे भूतगङ्गाग्निविस्तरम् ४२

जयदं पौष्टिकं सार्वकामिकं नागरे विदुः
गर्भे त्रिसप्तभागे तु दशांशं द्राविडेऽधमम् ४३

त्रयोदशांशकं श्रेष्ठं मध्येऽष्टांशे तु पूर्ववत्
त्रिःसप्तांशे निजायामे षट्पञ्चचतुरंशकम् ४४

जयदादि विशालं तत् पूर्ववद् द्राविडे मतम्
वेसरे पञ्चपञ्चांशे गर्भागारे विमानके ४५

त्रयोदशांशकं हीनं श्रेष्ठं स्यात् षोडशांशकम्
तयोर्मध्येऽष्टभागे तु नव लिङ्गानि पूर्ववत् ४६

पञ्चपञ्चांशके दर्घ्ये वसुधातुरसांशकम्
वेसरस्योदितं व्यासं पूर्ववज्जयदादिकम् ४७

विकारपरिधौ भूतव्यासः सर्वत्र कीर्तितः
गर्भमानमिदं प्रोक्तं हस्तमानं तु वच्म्यहम् ४८

आरभ्यैककरं नन्दहस्तान्तं षट्षडङ्गुलैः
वृद्ध्यायतास्त्रयस्त्रिंशत्संख्या लिङ्गस्य कीर्तिताः ४९

पञ्चारत्नि विमानाद्या द्वादशक्ष्माद्यसद्मनः
क्रमेणैव त्रयस्त्रिंशत्संख्या तासां विधीयते ५०

केचित् त्र्यङ्गुलवृद्ध्या तु वदन्त्येकादिहस्ततः
आयादिसम्पदामर्थं मानादेकाङ्गुलक्षयात् ५१

प्रवृद्ध्योत्तुङ्गमात्तव्यं तत्र दोषो न विद्यते
पञ्चपञ्चाङ्गुलं मूलाद् वृद्ध्याष्टककलाङ्गुलैः ५२

वृद्ध्या लिङ्गीयत शस्ते प्रत्येक नवमनिकम्
क्षुद्राल्पमध्यमोत्कृष्टहर्म्यानामुदितं क्रमात् ५३

द्वारोदयसमं श्रेष्ठं त्रिभागोनं कनिष्ठकम्
स्तम्भोत्सेधे नवांशे तु मुनिभूतांशकोदयम् ५४

तत्तन्मध्येऽष्टधा भक्ते नवलिङ्गोदयाः स्मृताः
नागरादिषु सौधेषु प्रोक्तव्यासानि पूर्ववत् ५५

प्रासादशिखरग्रीवस्थूप्यधिष्ठानमानकैः
केचिद् वदन्ति मुनयः कुम्भयोन्यादयो वराः ५६

गृहीतोत्सेधमानं तु मानाङ्गुलैर्विभाजयेत्
वृद्ध्या हान्याङ्गुलिच्छेदं परिहृत्य विचक्षणः ५७

उत्सेधेऽष्टगुणैः सप्तविंशद्भिर्हरणे ततः
शेषमश्वयुजाद्यं तु नक्षत्रं तु चतुर्गुणे ५८

नवभिर्हरणे शिष्टमंशकं तस्करादिकम्
भुक्तिः शक्तिर्धनं राज षण्डश्चाभयकं विपत् ५९

समृद्धिरिति विख्यातान्यंशकानि नव क्रमात्
तस्करं च विपत् षण्डं निन्दितं वस्तुपारगैः ६०

उत्तुङ्गवसुनन्दाग्नि गुणैरर्कदशाष्टभिः

शिष्टं धनमृणं चैव योनिकं स्याद् यथाक्रमम्  ६१

धनाधिकमृणं क्षीणं मानं तत् संपदां पदम्
योनिषु ध्वजसिंहश्च वृषो हस्ती शुभावहाः  ६२

तुङ्गं नवगुणं कृत्वा सप्तभिः क्षपयेत् ततः
शेषं सूर्यादिवारं स्यात् क्रूरास्तत्र विवर्जिताः  ६३

ग्रामादीनां च कर्तुश्च नक्षत्रेणाविरोधि यत्
तल्लिङ्गं देशदेशेशदेहिनां शुभकारणम्  ६४

इष्टायामविशालेन चतुरश्रीकृतं समम्
जातिरूपं तु तद् बिम्बं छेदनीयं यथोचितम्  ६५

छन्दमष्टाश्रकं षोडशाश्रं नाम्ना विकल्पकम्
वृत्तमाभासकं लिङ्गं तच्छेद्यं स्यात् त्रयात्मकम्  ६६

त्रिध कृत्वायतं मूले ब्रह्मांशं चतुरश्रकम्
अष्टाश्रं वैष्णवं मध्ये वृत्तमूर्ध्वांशमैशकम्  ६७

इष्टविष्कम्भमानेन चतुरश्रीकृतं समम्
कर्णायतार्धकर्णाभ्यामिष्टमष्टाश्रकं कृतम्  ६८

चतुरूयंशकयोर्मध्यं मध्यपट्टमिति स्मृतम्
व्यासे सप्तांशके त्र्यंशं मध्यपट्टं त्रिधोदितम्  ६९

कोणान्तात् पट्टसूत्रेऽङ्के तिर्यक्सङ्गतसूत्रकम्
पट्टार्धेनाङ्कितं यत्तु षोडशाश्रं तदुच्यते  ७०

एवमश्रान्तरे धीमान् योजयेत् तु विचक्षणः
कोटिच्छेदेन वृत्तं स्यान्निम्नं नैवोन्नतं यथा  ७१

श्राद्यं तु सर्वतोभद्रं द्वितीयं वर्धमानकम्
शिवाधिकं तृतीयं स्याच्चतुर्थं स्वस्तिकं भवेत्  ७२

श्रथ जगदमराणां सर्वतोभद्रमिष्टं सुखदमवनिपानां वृद्धिदं वर्धमानम्
धनदमिह विशां वै शम्भुभागाधिकं य-
च्छुभदमथ परेषां स्तस्तिकं तच्चतुर्णाम्  ७३

त्रिंशद्भागे सर्वतोवद्रलिङ्गे मूले मध्येऽग्रे दशांशं क्रमेण
वृत्तं तुल्यं सर्वतः शम्भुभागं विप्राणां तद् भूपतीनां प्रशस्तम्  ७४

वेदभूतरसभागिकैरधो भूतषरामुनिपदैरधः परम्
षट्कसप्तवसु भागया ततः सप्तनागनवभागया पुनः  ७५

वर्धमानमुदितं चतुर्विधं ब्रह्मविष्णुशिव भागतः क्रमात्
सर्वसम्पदुदयं जयप्रदं पुत्रवृद्धिदमिदं महीभृताम्  ७६

सप्तसप्तवसु भाग्या ततः पञ्चपञ्चकषडंशकैरपि
वेदवेदशर भागया ततो बन्धबन्धयुग भागया पुनः  ७७

उक्तमत्र हि मया चतुर्विधं तच्छिवाधिकमजादिभागिके
सर्ववस्तुदमिदं विशामलं सर्ववर्णयमिनामुदीरितम्  ७८

उक्तायामे स्वस्तिके नन्दभागे मूले द्व्यशं मध्यभागे गुणांशम्
पूजाभागे चातुरंशं क्रमेण चोक्तं शूद्रे सर्वकामप्रदं तत्  ७९

लिङ्गं सुरार्चितं धारालिङ्गं साहस्रलिङ्गकम्
त्रैराशिकं तु सर्वेषां सर्वकामफलप्रदम्  ८०

इष्टायामसमोपेतं स्वायामार्धार्धविस्तरम्
शेषं पूर्ववदुद्दिष्टं नाम्ना सुरगणार्चितम्  ८१

धारालिङ्गं सर्वलिङ्गे मतं तन्मूलेऽष्टाश्रं वा कलाश्रं युगाश्रम्
तस्मादूर्ध्वं द्वैगुणं स्यात् सधारं धारालिङ्गं स्ववर्णे प्रशस्तम् ८२

पूजाभागे सर्वतोभद्रलिङ्गे धारा कार्या पञ्चपञ्चक्रमेण
एकैकस्यामष्टपञ्चोपरिष्टात् साहस्रं तद्रेखया लिङ्गमुक्तम् ८३

रसमुनिवसु भागे वृत्तकेऽष्टाश्रकेऽन्ते
परिधिरथ नवांशे लिङ्गतुङ्गे तु भूयः
त्रिभिरथ गुणभागैश्च त्रिभिस्तुङ्गमानं
ह्यजहरिहरभागे तत्तु त्रैराशिकं स्यात् ८४

सस्थूलमूललिङ्गं यवमध्यं वा पिपीलिकामध्यम्
लिङ्गं तु शिरः स्थूलं ह्यार्षं लिङ्गं चतुर्भेदम् ८५

निजविपुलाष्टांशघ्नं मूले मध्ये तथा तदग्रे च
विष्णवजभागो सम्यक् चतुरश्रं चार्षके लिङ्गे ८६

लिङ्गं फलकाकारं द्व्यश्रं पञ्चाश्रकं त्रिकोणं च
एकादशनवषाट्सप्ताश्रं च द्वादशाश्रं च ८७

पूर्वोदितेतराश्रं शूलाग्रं शृङ्गसदृशशिरः
अन्यदपि भेदयुक्तं सशिरः सूत्रेतरं न मानयुतम् ८८

निम्नोन्नतझर्झरकं वैवर्ण्ययुतं च पूजानिम्नोन्नतं यथा
वक्रमवक्रयुतं वा वालुकरेखाकलङ्कबिन्दुयुतम् ८९

अथवैकरेखमेतान्युदितान्येव स्वयम्भुलिङ्गानि
नैवैतेषां मूलं लिङ्गानां शोधयेन्मतिमान् ९०

अज्ञानादपि मोहात् संशोध्य मूलमेव दोषकरम्
आस्थापनमथो लिङ्गं पूजाभागं तु पीठसमम् ९१

वृत्तं वाऽथ सधारं पूजाभागं तु मोक्षदं यमिनाम्
शिरसो वर्तमधुना लिङ्गानां वक्ष्यते क्रमशः ९२

छत्राभा त्रपुषाभा कुक्कुटकाण्डार्धचन्द्रसदृशाभा
बुद्बुदसदृशा पञ्चैवोद्दिष्टा वर्तना मुनिभिः ९३

व्यासे षोडशभागे लिङ्गस्यैकद्विगुणयुगांशेषु
संलम्ब्याधोभागानुभयोरपि पार्श्वयोः क्रमशः ९४

छत्राभानि शिरांसि च चत्वारीह प्रवर्तते विधिना
समलिङ्गे प्रथमे द्वे शैवाधिकलिङ्गके तृतीयं स्यात् ९५

चतुरंशेषु यदुक्तं तत् प्रोक्तं वर्धमानस्य
सङ्करमन्योन्यं वाप्यशुभं स्याद् वर्तनानां च ९६

त्रपुषाभानुषडंशे सार्धद्व्यंशेन कर्तव्या ९६-२

उच्चार्धं कुक्कुटजं त्र्यंशैकांशेन्दुखण्डनिभम्
बुद्बुदसदृशं सार्धं त्र्यंशं व्यासेऽष्टभागे तु ९७

सर्वेषामपि चैता सामान्यास्तत्र लिङ्गानाम्
शिरसो वर्तनभागं त्र्यंशैकं चाधिरोप्य निजतुङ्गे ९८

लिङ्गायामे षट्षड्भागयुते तेन सार्धमतः
इन्द्वश्विनिगुणभागाः प्रोक्ताः सर्वेष्वपि क्रमशः ९९

अवरे मध्यमलिङ्गे श्रेष्ठे लिङ्गे ततः शिरोमानम् ९९-२

लिङ्गानां शिरसीप्सितांशमुभयोः संलम्ब्य तत्पार्श्वयोः
कृत्वा मत्स्ययुगं तदास्यजघनान्निष्क्रान्तसूत्रद्वये
तस्माद् यत्र च संयुतिर्मतिमता बिन्दुत्रयाढ्यं यथा
कर्तव्यं बहुवर्तनास्व भिमतं सोपायमीशोदितम् १००-२

वक्ष्येऽहं लिङ्गानां सर्वेषां लक्षणोद्धरणम्
शाणाभिस्तनुवालुकसहितैर्गोवालरज्ज्वाद्यैः १०१

उद्घृष्ट्या सकृदेव हि युक्त्या चिह्नं परीक्ष्य यत्नेन
शुभतरमङ्कं दृष्ट्वा चारभेल्लक्षणोद्धरणम् १०२

प्रासादस्य समीपे मण्डपके चित्रवस्त्रशोभाढ्ये
शाल्यादि भिरपि युक्ते तण्डुलके स्थण्डिले रम्ये १०३

तल्पोपरि सितवस्त्रप्रस्तरशयने न्यसेल्लिङ्गम्
आचार्यः स्थपतिश्चाहतवस्त्रैर्हेमपुष्पाद्यैः १०४

पञ्चाङ्गभूषणैरप्यलमतिशोभैरलंकृत्य
सितपुष्पालेपनसोष्णीषाद्यैः शोभनं कुर्यात् १०५

नेत्रमन्त्रमनुस्मरन्नजसूत्रं पार्श्वसूत्रं च
हाटकनिर्मितसूच्या आचार्यः संलिखेद् रेखाम् १०६

पश्चाद्धेममयेनैवारभ्यास्त्रेण च स्थपतिः
पुनरपि लघुतरशस्त्रैर्लघु हस्तैराज्यदुग्धमधुसहितम् १०७

सम्यग् रेखा लिखिता निर्भ्नरकमयं यथाशोभम्
सितवस्त्रेणाच्छाद्याखिलधान्यान् गोद्विजवत्साध्याः १०८

दर्शयितव्या कन्या युक्त्या शेषं नयेन्मतिमान्
प्रथमे नागरलिङ्गे षोडशभागीकृते शिवायामे १०९

षड्भूतवेदभागान् त्यक्त्वोर्ध्वे कन्यसाद्युदयम्
एवं त्रिकमुत्सेधं बुद्ध्वाऽथ त्र्यंशकात्तु सर्वेषाम् ११०

विष्णवंशाभिमुखे द्वे सूत्रे संलेखयेत् पार्श्वे
पृष्ठे तयोर्युतिः स्याद्धीने वेदाग्निपक्षेषु १११

मध्ये भूतवनानलपङ्क्तेषु यतिस्तयोः पृष्ठे
श्रेष्ठे षड्भूतवनानलपङ्क्तेषूदिता तु युतिः ११२

तेषु गृहीत्वैकांशं त्रिद्व्यंशं सूत्रविष्कम्भम्
यावदधः कृष्णांशं ह्युक्तोत्सेधे नयेत् तु समम् ११३

एवं नागरलिङ्गे सूत्रं सम्यङ् मयेनोक्तम्
त्रिःपञ्चभागिकेऽस्मिन् द्राविडलिङ्गे शिवायामे ११४

नन्ददशरुद्रांशा हीनाद्युदयाः समुद्दिष्टाः
मुनिवसुनवभागे ह्यंशैः संलम्बयेत् सूत्रे ११५

युगगुणनयनेष्वन्त्ये मध्ये शरवेदवह्नियुगलेषु
रसशरयुगबन्धेषु प्रोक्ता श्रेष्ठे तयोस्तु युतिः ११६

द्राविडलिङ्गे सूत्रव्यासं स्वांशार्धतः प्रोक्तम्
वेसरलिङ्गे पूजाभागे त्रिःपञ्चभागे तु ११७

दशभागं सूत्रोच्चं वस्वंशात् सम्यगारभ्य
लम्बनमथ भूतवनानलपङ्क्तांशेषु सूत्रयुतिः ११८

व्यासे द्विरष्टभागे विष्कम्भांशो वरः प्रोक्तः
आयामे वसुभागे वेदांशैरुच्छ्रितस्तु ततः ११९

गुणभागादारभ्य द्व्यंशे चैकांशके तयोस्तु युतिः
व्यासे गृहीतभागैकैकं विभजेत् त्रिधा द्व्यंशम् १२०

एवं मध्यममिष्टं द्वादशभागीकृते तुङ्गे
शेषं पूर्ववदुद्दिष्टं विष्कम्भं भागयोः प्रोक्तम् १२१

गदितं कन्यसमेवं वेसरलिङ्गे तु सूत्रं तत्

अात्तांशे नवभागे भागेन व्यासगम्भीराः १२२

रेखाविकर्कशोक्ता सर्वेषामेव लिङ्गानाम्
अष्टौ यवान् गृहीत्वा नवधा विभजेत् समं दृढतरधी १२३

एकांशेनैककरोत्तुङ्गे लिङ्गे विधातव्या
एकैकभागवृद्ध्या नव हस्तान्ते तु लिङ्गे तु १२४

अष्टयवान्तरगाढा सा रेखा सम्यगुद्दिष्टा
अर्धयवेनाप्युदिता रेखार्धयवेन पूर्ववद् वृद्धिः १२५

सार्धचतुर्यवतारावनतिः श्रेष्ठे तु लिङ्गे तु
मध्यमसूत्रव्यासादर्धततिः पक्षयोस्तु पृथक् १२६

स्वेषां रेखाणां व्यासावनतिः समा एव
अथ नागरादिकानां वक्ष्ये सामान्यलक्षणोद्धरणम् १२७

षोडशभागे पूजाभागोच्चेऽधो विहाय नयनांशम्
उपरिष्टाच्चतुरंशं दशभागं साग्रकं सूत्रम् १२८

मणिरेखा भ्रमणीयाधस्ताद् द्व्यंशं विहाय कं मुकुलात्
पृष्ठे तयोर्युतिः स्यान्मुकुलव्यासं तु भागेन १२९

अथवा षोडशभागेऽधोंऽशं त्यक्त्वा दशांशके नालम्
शेषं पूर्ववदुक्तं सामान्यं सर्वलिङ्गानाम् १३०

द्वादशभागे रौद्रे त्यक्त्वोर्ध्वेऽधो द्विभागमेकांशम्
नवभागे साग्रं तच्छेषं पूर्वोक्तवत् कार्यम् १३१

द्विर्नवभागे शैवेऽधोर्ध्वे द्व्यंशं शरांशं च
रुद्रांशैरजसूत्रं मुकुलं भागेन पूर्ववच्छेषम् १३२

शैवे द्विरष्टभागेऽधोर्ध्वे द्व्यंशं युगांशकं नीत्वा
दशभागं सूत्रोच्चं तदंशकस्त्वष्टांशकात् समारभ्य १३३

शररसमुनिवसुभागेष्वेवं लम्बपक्षयोः सूत्रे
पृष्ठे तयोर्युतिः स्याद् भागं त्यक्त्वा पुरोक्तवच्छेषम् १३४

सूत्रेण भस्मनैव प्रथमं सूत्रं प्रवर्त्य सूत्राग्रम्
घटिकाग्रेण विलिख्य तु पार्श्वे सूत्रेण लक्षणं कुर्यात् १३५

सूत्राणां सर्वेषां कर्तव्या वर्तना तदग्रे तु
लिङ्गानां शिरसि यथा सामान्यं स्यात्तथा समुद्दिष्टम् १३६

अश्वत्थपत्रसदृशं कदलीमुकुलोपमं यवाभं च
अम्बुजकुड्मलसदृशं सामान्यं सर्वलिङ्गेषु १३७

सूत्राग्रमात्तभागैकांशं व्यासोन्नतं हि मतम्
लिङ्गानामाहत्यं सूत्राग्रं वक्ष्यते विधिना १३८

छत्राभाग्रे लिङ्गे कुञ्जरनयनोपमं तु सूत्राग्रम्
खण्डेन्दुनिभे लिङ्गे शूलाग्रं बुद्बुदाभे च १३९

त्रपुषाभे लिङ्गाग्रे सूत्राग्रं कुक्कुटाण्डनिभम्
छत्राभं सूत्रागं लिङ्गे स्यात् कुक्कुटाण्डनिभे १४०

नाहे सप्तदशांशेष्वेकं गृह्य त्रिधा द्व्यंशम्
मध्यमसूत्रव्यासं तस्यार्धे पक्षयोः सूत्रे १४१

लिङ्गायामे योज्यं सामान्यं सर्वमेतत् स्यात् १४२

लिङ्गायामं विस्तृतं स्वस्वभेदैर्नाम्नैषां सम्यगुष्णीषमानम्
छत्राभाद्युष्णीषसूत्रं मयेह प्रोक्तं युक्त्या नागरादिक्रमेण १४३

वक्ष्येऽहं स्फाटिकं लिङ्गं नीचमध्योत्तमक्रमात्
एकाङ्गुलं समारभ्यैवाङ्गुल्यङ्गुलवर्धनात्  १४४

षडङ्गुलान्तमत्सेधं पूजांशं कन्यसं मतम्
सप्ताङ्गुलं समारभ्य यावद् द्वादशमात्रकम्  १४५

पूजाभागोदयं लिङ्गे मध्यमे तु प्रकीर्तितम्
सैकार्काङ्गुलमारभ्य चाङ्गुलाङ्गुलवर्धनात्  १४६

अष्टदशाङ्गुलं यावत् पूजांशोच्चं षडुत्तमे
तद्धीनादर्धमात्रेण वृद्ध्यैकादशसंख्यया  १४७

श्रेष्ठमध्यपरे लिङ्गे त्रयस्त्रिंशत् समुन्नतम्
पूजांशार्धत्रिभागैकं गाढं वा स्फाटिकं मतम्  १४८

समं त्रिपादमर्धं वा पूजांशोच्चस्य विस्तृतम्
साधारं वाथ वृत्तं वा स्फाटिकानामथाकृतिः  १४९

वर्तना शिरसस्तस्य नागरादिषु वै यथा
मध्ये वरे तु लिङ्गे तु ब्रह्मसूत्रं तु पूर्ववत्  १५०

ब्रह्मसूत्रं विना ह्येतत् तेजोद्रव्यं वरप्रदम्
स्वव्यासद्विगुणं सार्धं द्विगुणं त्रिगुणं तु वा  १५१

पीठस्य मण्डनं नालं युक्त्या तत्र प्रयोजयेत्
पूजांशोच्च समं वाऽथ त्रिभागं पिण्डकोदयम्  १५२

मृद्वृक्षरत्नलोहैश्च कुर्यात् स्फाटिकवद् दृढम्
मृन्मयं युक्तितः पक्वमपक्वं वा यथेष्टतः  १५३

वृक्षजं दोषनिर्मुक्तं लोहजं घनमिष्यते

घनं साङ्गमनङ्गं वा लोहेन सकलं मतम्  १५४

लोहेन पूजितं कल्प्य भुक्तिमुक्तिफलप्रदम्
लिङ्गं शिलेतरं सर्वं मणिलिङ्गमिति स्मृतम्  १५५

स्वयोन्या वाऽथ लोहेन स्फाटि कादिषु पिण्डिका
स्वस्वयोग्यानि लोहानि स्फाटिकान्येषु पीठकम्  १५६

स्थाप्यते लोहपीठे तु रत्नजं तु स्थितिर्यथा
संकल्पकवशादत्र ब्रह्मविष्णुमहेश्वराः  १५७

युक्त्या योज्यं बुधैर्लिङ्गं भुक्तिमुक्तिप्रसिद्धये
बाणलिङ्गं यथालाभं ततत् सम्यग् निधापयेत्  १५८

पञ्चत्रिभागमुच्चार्धं त्रिद्व्यंशं वार्चनार्हकम्
भागं शेषांशकं पीठबन्धं स्याद् बाणलिङ्गके  १५९

रेखाबिन्दुकलङ्काद्यैर्वैवर्ण्यैर्मक्षिकापदैः
त्रासैस्तु शर्कराभिस्ते मणयो वर्जिता भृशम्  १६०

लिङ्गं महत्त्वधिष्ठाने चार्धे स्थिते च मध्यमम्
समाप्ते च विमाने स्यात् कन्यसं स्थापयेद् बुधैः  १६१

एवं स्थाप्यं लिङ्गमुक्तप्रकारं श्रीसौभाग्यारोग्यभोग्यप्रदायि
उक्तादन्यद् यत् कृतं तद् विपत्त्यै पत्युर्नित्यं रोगशोकप्रदं स्यात्  १६२

इति मयमते वस्तुशास्त्रे लिङ्गलक्षणं नाम त्रयस्त्रिंशोऽध्यायः

## अथ चतुस्त्रिंशोऽध्यायः

निष्कलानां तु लिङ्गानां सकलानामथाधुना

सामान्येन विधानेन वक्ष्येऽहं पीठलक्षणम्  १

जात्यैकया विधातव्यं नेष्टमन्योन्यसङ्करम्
आहुः शैले द्रुमे केचित् पीठं पक्वेष्टकामयम्  २

लोहजं मणिलिङ्गानां लोहजानां तु पैण्डिकम्
आदाय स्त्रीशिलां सम्यक् पीठं लिङ्गस्य निर्मितम्  ३

पूजांशं द्विगुणं हीनं श्रेष्ठं लिङ्गोन्नतेः समम्
नवैते पीठविस्तारास्तयोर्मध्येऽष्टभाजिते  ४

उत्तमा मध्यमा हीनास्त्रित्रिभेदाः प्रकीर्तिताः
अथवा लिङ्गतुङ्गार्धं हीनं पादोनकं वरम्  ५

तयोर्मध्येऽष्टभागे तु पीठव्यासादि पूर्ववत्
विष्कम्भं त्रिगुणं वाऽथ नाहतुल्यविशालकम्  ६

गर्भागारं त्रिभागैकं चतुर्भागकमेव वा
विष्कम्भकर्णद्विगुणं सार्धं च त्रिगुणं तु वा  ७

पीठविस्तारमुद्दिष्टं स्वाष्टांशोनमथोपरि
मण्डनाय स्वविस्ताराष्टांशोनैवाधिकं ततः  ८

सर्वेषामपि पीठानां जन्मान्तं मूलविस्तृतम्
अग्रव्यासं महापट्टिकान्तं सम्यक् प्रकीर्तितम्  ९

विष्णुभागसमोत्सेधं सपादं सार्धमेव वा
चतुरश्रं च वस्वश्रं षडश्रं द्वादशाश्रकम्  १०

द्विरष्टाश्रं सुवृत्तं च तेषामेवायतान्यपि
त्रिकोणमर्धचन्द्रं च चतुर्दशनिभानि वै  ११

समानि यानि लिङ्गस्य तानि पीठानि संज्ञया
सायतान्यासनानीति सकलानां वदन्ति वै १२

त्रिकोणमर्धचन्द्रं च निष्कले सकले क्रमात्
भद्रपीठं च पद्मं च वज्रपीठं महाम्बुजम् १३

श्रीकरं पीठपद्मं च महावज्रं च सौम्यकम्
श्रीकाम्याख्यमिति प्रोक्ता नाम्नैता नव पीठिकाः १४

स्वनाम्नाकृतियुक्त्या तु त्रिकोणार्धेन्दुसंयुते
पीठिकानामलङ्कारं क्रमशो वच्यतेऽधुना १५

गृहीतोत्सेधमानांशवशेन विविधेन च १५-२

त्रिःपञ्चांशे द्व्यंशि जन्मं युगांशं वप्रं सार्धं पद्मकं तद्दृगर्धम्
कुम्भं द्व्यंशं चेपणं चार्धमूर्ध्वे ग्रीवं सार्धं पूर्ववत् चेपणोच्चम् १६

द्व्यंशं पट्टं स्नेहवार्यर्धभागं तत् सामान्यं भद्रपीठं सुहृष्टम्
विप्रोर्वीभृद्वैश्यकानां परेषां श्रीसौभाग्यारोग्यभोग्यप्रदायि १७

द्विरष्टभागेऽश्विनिबाणनेत्रैर्युगांशनेत्रेन्दुभिरत्र पट्टम्
पद्मं च वृत्तं च दलं च पट्टं स्यात् पद्मपीठं घृतवारियुक्तम् १८

द्विःसप्तांशे सार्धमर्धं गुणार्धं जन्मं निम्नं पङ्कजं तत्क्रमेण
पट्टं निम्नं चार्धमर्धं तु भागं वज्रं निम्नं कम्पकं पूर्ववत् स्यात् १९

त्र्यंशं पद्मं निम्नमर्धं तदूर्ध्वेऽध्यर्धार्धांशा पट्टिकाज्यार्थभागा
एतत् पीठं वज्रपद्मं हि नाम्ना सामान्यं तत् सर्वलिङ्गेषु शस्तम् २०

त्रिःषड्भागे द्व्यर्धवेदांशकार्धैः सार्धद्व्यर्धार्धार्धकार्धानलांशैः
अर्धाध्यर्धार्धांशकैर्जन्ममब्जं पट्टं निम्नं पङ्कजं वृत्तमब्जम् २१

निम्नं पट्टं पङ्कजं स्यात् तदूर्ध्वे श्रीपट्टं तत्स्नेहभारं क्रमेण
एतन्नाम्ना सम्यगुक्तं महाब्जं चित्रं सद्भिः पौरुषे चार्षकेऽपि २२

लब्धोत्सेधे षोडशांशेंऽशिजन्म त्र्यंशं वप्रं पद्मतुङ्गं युगांशम्
हृद्भागार्धं द्व्यंशिवृत्तं धृगर्धं पद्मं त्र्यंशं पट्टिका सार्धभागा २३

अर्धांशं तत् स्नेहवार्यर्धखातं तावद्व्यासं त्र्यंशकं वा युगांशम्
नालव्यासं निर्गमं तत् त्रियंशं कुर्यादग्रं श्रीकरं श्रीकरं तत् २४

अध्यर्धार्धद्व्यर्धकार्धार्धकार्धैः पक्षार्धैर्द्व्यर्धैः खुरं निम्नमब्जम्
पट्टं निम्नं पट्टमब्जं तु निम्नं पट्टं निम्नं पीठपद्मं दशांशे २५

त्रिःपञ्चांशे लब्धतुङ्गे च सार्धं चार्धं वेदद्व्यर्धसार्धेन्दुभागैः
अर्धद्व्यर्धाध्यर्धकार्धैः क्रमेण जन्मं निम्नं पट्टकं तत्क्रमेण २६

जन्मं निम्नं पङ्कजं पट्टकं तद्वज्रं वृत्तं क्षेपणं कञ्जमूर्ध्वे
पट्टं निम्नं तन्महावज्रमुक्तं नाम्ना सौम्यं सर्वसंपत्करं स्यात् २७

वज्रं वृत्तं तुङ्गनाम्ना तदेव सौम्यं पीठं सम्पदायुष्करं स्यात्
द्विःषड्भागे चन्द्रनेत्रार्धभागैः सार्दार्धार्धैः सार्धसार्धार्धकार्धैः २८

अध्यर्धेनार्धेन जन्मं तु वप्रं निम्नं पद्मं धृग्दलं वृत्तमब्जम्
धृक्पद्मं तत्पट्टिकानिम्नपट्टं श्रीकाम्यं तल्लब्धतुङ्गे मयोक्तम् २९

धाम्नि प्रोक्तान्यप्यधिष्ठानकानि तान्यप्यस्मिन्मण्डनीयानि युक्त्या ३०

यथाबलं यथाशोभं यथायुक्ति प्रवेशनम्
निर्गमं सर्वपीठानामङ्गानां परिकल्पयेत् ३१

पीठव्यासत्रिभागैकं चतुर्भागिकमेव वा
निर्गमं मूलविस्तारं प्रणालस्य प्रकल्पयेत् ३२

मूलादर्धं त्रिपादं वा त्रिभागैकांशमेव वा
प्रणालस्याग्रविस्तारं त्रिपादं वा घनं समम्  ३३

गजोष्ठसदृशाकारं गोमुखाकारमेव वा
मूलाग्रविपुलत्र्यंशव्यासं स्यात् खातनिम्नकम्  ३४

इष्टदिङ्मुखलिङ्गस्य पीठमध्यं तदेव हि
नालं वामे प्रकर्तव्यं सधारं वा यथारुचि  ३५

अग्रपट्टस्य विस्तारं स्वोच्छ्रयेण समन्वितम्
सपादं वाऽथ सार्धं वा त्रिपादं वा यथाबलम्  ३६

तत्पट्टस्य घनं खातं तन्मूले कारयेद् बुधः
क्रमेणोन्नतिमल्लिङ्गसङ्गमं परिकल्पयेत्  ३७

शिवभागमधः पीठात् किञ्चिदप्यवलम्बनम्
उन्नतं यदि चेन्नित्यं सर्वेषामशुभं भवेत्  ३८

ज्याकारमर्धचन्द्रस्य प्रकुर्याद् द्वारसम्मुखम्
पीठस्यास्य त्रिकोणस्य ऋृज्वंशं द्वारसम्मुखम्  ३९

पीठाश्रं द्वारसूत्रस्य वेधकं नेष्यते बुधैः
दृषदैकेन कर्तव्यं पीठं निःसन्धिकं शुभम्  ४०

एकालाभेऽपि कर्तव्यमेकयैवोर्ध्वमण्डनम्
क्षुद्रे महति मध्येषु चागतं सन्धिमण्डितम्  ४१

उपर्युपरि पीठानां सन्धिरङ्गावसानके
नालमध्येऽर्धमध्ये च कर्णे सन्धिं न सन्धयेत्  ४२

युञ्जीयाद् दक्षिणे वामे दीर्घादीर्घं यथाक्रमम्

त्रिखण्डं वाप्यनेकं वाधोगतं युक्तितो न्यसेत् ४३

लिङ्गायामसमव्यासा श्रेष्ठा ब्रह्मशिलापरा
पूजांशद्विगुणाष्टांशे तयोर्मध्ये तु भाजिते ४४

पूर्ववन्नवधा व्यासा स्वव्यासार्धोन्नता वरा
व्यासार्धार्धघना हीना तयोर्मध्ये तु पूर्ववत् ४५

अथवा लिङ्गविष्कम्भद्विगुणा श्रेष्ठविस्तरा
अध्यर्धं कन्यसी प्रोक्ता स्वव्यासार्धत्रिपाद्धना ४६

व्यासोत्सेधेषु तेष्वेवं पूर्ववन्नवधा भवेत्
आकृतिर्ब्रह्मभागस्य संस्थानं तु यथा तथा ४७

लिङ्गव्याससमं व्यासं मध्ये खातं प्रकल्पयेत्
स्वव्यासार्धं तु वाष्टांशं गम्भीरं लिङ्गमूलवत् ४८

न्यस्तरत्नयुतं सम्यक् श्लिष्टं तल्लिङ्गमूलतः
नपुंसकाश्मना तत्र कर्तव्या ब्रह्मणः शिला ४९

पीठब्रह्माश्मनोर्नन्द्यावर्ताभा मध्यमे शिलाः
चतस्रस्ताः प्रयोक्तव्याः प्रादक्षिण्यक्रमेण तु ५०

स्थानकासनयुक्तानां प्रतिमानां परेऽपरे
एकद्वित्रिचतुःपञ्चषण्मात्रं वाधिकं ततः ५१

आसनानां स्वविस्तारादष्टभागाधिदैर्घ्यकम्
द्विगुणान्तं निजायामं मण्डनं पैण्डिके यथा ५२

त्रिचतुःपञ्चभागोच्चे बेरायामे यथाक्रमम्
शयने चासने भागं स्थानके विष्टरोदयम् ५३

यथोचितं तथा दैर्घ्यव्यासं स्याच्छयनेऽपि च
ब्रह्मादीनं तु देवानां देवीनामासनं मतम् ५४

सोपपीठं गुहाङ्घ्रिस्थसिंहं सिंहासने मतम्
त्रिपद्मे वीचिसंयुक्ते नानामण्डनमण्डिते ५५

सिंहासनविधिं दृष्ट्वा विधेया तदलङ्कृतिः
बाणलिङ्गादिलिङ्गानामार्षाणां च स्वयम्भुवाम् ५६

पीठं प्रासादरूपं च यथेष्टं कारयेद् बुधः
पूर्वोक्ते पौरुषे लिङ्गे पीठव्यासादि पूर्ववत् ५७

तन्मानेन विमानानां विस्तारं सम्यगुच्यते
पीठस्य द्विगुणं गेहं चतुःपञ्चगुणं तु वा ५८

नालीगेहस्य विस्तारं पूर्ववद् वा विधीयते
त्रिभागेनकमर्धं वा दृढं वा भित्तिविस्तृतम् ५९

सान्धारं वा निरन्धारं कूटकोष्ठादि पूर्ववत्
लिङ्गमानवशात्सौधं प्रोक्तं पूर्ववदुच्छ्रयम् ६०

गृहीतभवनस्तम्भद्वारमानवशादपि
यथाजातं तथा बेरवशात् सौधं प्रकल्पयेत् ६१

तथैव सकलस्यापि प्रासादं परिकल्पयेत्
बेरायामसमं गेहमध्यर्धं द्विगुणं मतम् ६२

बेरायामे त्रिभागे तु द्व्यंशाधिकविशालकम्
गर्भगेहस्य विस्तारे चतुर्भागे त्रिभागिके ६३

द्विभागे चन्द्रभागं तु स्वविशालार्धमानकम्

लाक्षागुलमधूच्छिष्टगुग्गुलूनां समांशकाः ६४

एतेषां द्विगुणं भागं ग्राह्यं सर्जरसं तदा
गैरिकाचूर्णकं तस्मादर्धं तु घनचूर्णकम् ६५

सर्वेषामर्धतस्तैलं निक्षिपेल्लोहभाजने
लोहदर्व्या चलं कुर्यात् पाचयेन्मृदुवह्निना ६६

अष्टबन्धमिति प्रोक्तमश्मवद् दृढबन्धनम् ६६-२

स्थापनीयमिह कर्तुरिच्छया लिङ्गमेकमथवाप्यनेककम्
यत्र यत्र परितस्तु मध्यमे भित्तितस्त्वपि च येन केन वा ६७

एकधाम्नि बहुधाम्नि वा ततः शूललिङ्गभवनं महत्तरम्
शेषमत्र विधिनोहनीयकं शिल्पविद्दृढतरेण बुद्धिना ६८

गर्भागारे सप्तसप्तांशकेंऽशं मध्ये ब्राह्मं दैविकं चाष्टभागम्
मानुष्यं तत् षोडशांशं बहिष्ठात् पैशाचांशं स्याच्चतुर्विंशमंशम् ६९

शैवं ब्राह्मे वैष्णवं दैविकांशे सर्वे देवा मानुषे स्थापनीयाः
पैशाचांशे मातरश्चासुराद्या रक्षोगन्धर्वादियक्षाश्च शेषाः ७०

मध्ये सूत्रं ब्रह्मणस्तस्य वामे शम्भोर्मध्यं विष्णुसूत्रं तयोश्च
एवं नीत्वा दिग्गतं तत्क्रमेण स्थाप्याः सर्वा देवता विष्णुसूत्रे ७१

सकलमकललिङ्गं मिश्रकं वा विधिज्ञः
स्थपतिरचलधीमान् स्थापयेत् सावधानः
सुवृतकनकयज्ञो भूषणैः संविभूष्य
सकलविभवयुक्तः स्थापकेनैव सार्धम् ७२

सर्वात्मीयं लिङ्गमाकाशरूपं तस्माल्लिङ्गं पौरुषं स्थापनीयम्

तज्ज्ञैर्युक्त्या सावकाशालये वा पश्चाद् बध्नीयात् तु वा मूर्ध्नेष्टकां वा ७३

एवं पीठं चासनं निष्कलानामर्चानां वा मराडनं तत्प्रणालम्
लिङ्गानां वै पौरुषाणां विमाने प्रोक्ते नीत्या स्थापना च क्रमेण ७४

इति मयमते वस्तुशास्त्रे पीठलक्षणं नाम चतुस्त्रिंशोऽध्यायः

अथ पञ्चत्रिंशोऽध्यायः

अनुकर्मविधानम्

अथ वक्ष्ये हर्म्याणां लिङ्गानां पीठकानां च
प्रतिमानामन्येषां वास्तूनां लक्षणान्तरतः १

अनुकर्मविधिं सम्यक् संक्षेपात् तत्क्रमेणैव
भवनं भिन्नं पतितं वक्रं प्राचीनतत्त्वं च जीर्णं च २

जातिश्छन्दविकल्पा भाससंस्थानकेभ्य इतरं च
यान्यपयलक्षणानि हि तानि च तत्तल्लिङ्गभेदवशात् ३

तत्र द्रव्यैरन्यैरुत्कृष्टैर्वा नवैस्तु घटैः
आयाद्यथोचितं तद्विस्तारोच्चादिभिस्त्वलङ्कार्यैः ४

यानि सलक्षणकानि प्रत्यङ्गोपाङ्गदेशेषु
तानि च तत्तद्द्रव्यैर्हीनादीन्येव येन केन चित् ५

यावद्धानतां यान्ति यावत्सौम्यप्रयोज्यानि
यावत्तदेव धीमान्नवतां प्रकर्तुमिच्छति चेत् ६

तत्तद्विपुलोत्सेधे सौष्ठिककोष्ठाद्यलङ्कारैः
नात्येकमुदितं तत्स्वाकृत्या सर्वथा तज्ज्ञैः ७

नागरभवने नागरमुदितं स्याद्द्राविडभवने द्राविडमुदितम्

वेसरभवने स्याद् वेसरं शुभदमर्पितभवनेऽप्यर्पितभवनम्  ८

अर्पितादितरभवनेऽप्यर्पितादितरभवनम्
योज्यं क्रमेण विदुषा वस्तु सदा सर्वयत्नेन  ९

सप्राकारविमाने सालाद्बहिर्वाबहिस्तूक्ताः
प्रासादे या गतयः कुरुते तद्विधिं सम्यग्गाढमथ वक्ष्ये  १०

मूलविमानसमं वा तदधिकमन्यतरं निरुतेष्टम्
दिक्षु समोन्नतत्त्वं विदिक्षु शेषेषु वा कुर्यात्  ११

विमाननिष्क्रमं मूलाष्टमूलाब्धिहीनं तु युक्तिवशात्
उत्तरतो वा पुरतः परितः सालं तु वर्धयेद् विधिना  १२

भवने जीर्णमथ तत्कर्तव्यं चेत्तदन्यस्मिन्
दिक्षु चतुर्ष्वपि नेष्टं तस्य बाह्ये वस्तुविदा  १३

विपरीते तु विपत्त्यै तस्माद्युक्तक्रमेण कर्तव्यम्
सन्त्यज्य नष्टवस्तुगर्भविधानात् पुनः स्थाप्यम्  १४

पतितं स्फुटितं लिङ्गं दुस्तरपारासुवृत्तं च
वक्रमधोगतलिङ्ग लिङ्गादत्यूर्ध्वगतलिङ्गम्  १५

परितर्कैरुपकामं तदज्ञेन स्थाज्पितं लिङ्गम्
भिन्नं ज्वलनालीढं शीर्णं सस्फोटनं तु भग्नं च  १६

चोरादिभिरुद्धृतं किंदेशं स्थानं तु दूषितैः स्पृष्टम्
विपरीतमयोगं यल्लिङ्गं संदृश्यते तु भुवि  १७

तेन सदाशिवमुदितं तज्ज्ञैर्लोकेऽपि जन्तूनाम्
पतिते चेत्स्थापिते लिङ्गेऽस्मिन्नज्ञेन केनापि  १८

अन्यत्सूर्यकिरणान्निहतं लिङ्ग स्थापयेत् तत्र
अन्त्येनान्तरितं वा श्वभ्रान्तं नैव संप्राप्तम्  १९

अनभीष्टमार्गतास्यं तल्लिङ्गं तुच्छमिति कथितम्
तत्रैव तु तल्लिङ्गं सम्यग्विद्वान् यः समीकुर्यात्  २०

वक्रं च वक्रवृत्तं तल्लिङ्गं यत्तदेव तत्समितम्  २०-२

तल्लिङ्गं तु निमग्नं कालज्ञातं तथा वापि
तदधोगतमित्युक्तं तल्लिङ्गं चोद्धरेत् समितम्  २१

तल्लिङ्गं तु निमग्नं कालाज्ञातमूर्ध्वगतम्
तत्र स्थाप्यं निर्दोषकं यदिदम्  २२

सरितः स्रोतः पतितं नीत्वा शतदण्डमन्यस्मिन्
स्थाप्यं तद्दैविकविधिना शुद्धे देशे मुखं प्राग्वत्  २३

मन्त्रक्रियेतरलिङ्गं सर्वेषां लक्षणोपेतम्
अज्ञस्थापितमेतत्तद्योजयेद् विधिना  २४

हीनं ज्वलनालीढं जीर्णं सस्फोटकं च भग्नं च
लिङ्गं सार्ध्यं त्यक्त्वा पुनस्तत्स्थापयेन्नवं लिङ्गम्  २५

अधरोत्तरमज्ञानां मोहेन वाऽप्यन्यदाननयुक्तम्
विपरीतं त्यजेत् सहसा उचितं यन्नवमन्यत्तत्रैव स्थापयेद् विधिना  २६

अत्रोचितलक्षणं तत् शून्य तलं तु वा चाक्षम्
ग्राह्यं क्षेत्रगतं यन्न तद्योग्यं सर्वथा त्याज्यम्  २७

तत्रैवान्यल्लिङ्गं नवमुचितं स्थापयेद् विधिना
चोरादुद्धृतकं तदन्तःपतितं चेत्पञ्चसन्धानम्  २८

तत्र तदेव स्थाप्यं निर्दोषं पूर्ववद् विधिना २८-२

चण्डालशूद्रकाद्यैः स्पृष्टं च लिङ्गं तर्ह्ययोग्यकं शस्तम्
नदीतीरं चेत् मन्दिररहितं तु तल्लिङ्गम् २९

पूर्वस्यामुत्तरतो नीत्वान्यस्मिन् शुभे देशे
सुस्थापितं लिङ्गं पूर्ववदेवानाय्य विधिनापि ३०

बेरं वाप्येवं तत्तद्युक्त्यान्यस्मिन्नवे देशे
स्थाप्यं यदि निर्दोषं सर्वमनुक्तं तु तल्लिङ्गे ३१

द्वादशवर्षादूर्ध्वं शून्यत्वं याति यल्लिङ्गम्
तत्तन्निर्दोषं यदि नाग्राह्यमिदं वदन्ति केचिज्ज्ञाः ३२

शिलामयं तर्ह्युदके निक्षिपेत् त्वरितं बुधः
शिलादिपीठं निर्दोषं प्रयोज्यं चेत्तदेवहि ३३

ग्राह्यं ब्रह्मशिलादि स्यात् द्रव्यं पिण्डं च पूर्ववत्
अलक्षणं च हीनं च स्फुटितादिभिरन्वितम् ३४

सन्त्यज्य विधिना पीठं कुर्यादाकृति पूर्ववत्
पाषाणेनैव पाषाणे चेष्टका चेष्टकामये ३५

पूर्ववत् पतितं पूर्वं पीठं कुर्याद् यथोचितम्
अलाभे ह्युपले चैव वेष्टके चेष्टका भवेत् ३६

बेरे शिलामये चैव वृक्षजे विकलाङ्गके
सन्त्यज्य सहसा बेरं स्थापयेत् पूर्ववन्नवम् ३७

मानोन्मानादुपेतं च जीर्णवत्स्फोटनादिकम्
बेरं त्यक्त्वान्यमत्रैव स्थापयेद् विधिना पुनः ३८

लोहजे मृण्मये बेरे हस्तनासाङ्घ्रिभूषणे
कर्णदन्तादिहीनं तु तत्तद्द्रव्यैर्दृढीकृतम्  ३९

उत्तमाङ्गविहीने तु त्यक्त्वान्यं योजयेन्नवम्
प्रासादे वाऽथ लिङ्गे वा पीठे वार्चासु सर्वदा  ४०

तत्तद्द्रव्यैर्वरैर्वाऽपि कुर्याद्धीनैर्न योजयेत्
जीर्णे च तेन यः कर्तुमिच्छेद् द्रव्येन पण्डितः  ४१

पूर्वमार्गेण निष्पाद्य समं कुर्याद् यथाविधि
तुल्यं हीनेऽधिकं चेष्टं सर्वदा शुभमिच्छताम्  ४२

हीनं कुर्याद् वरद्रव्यैः समं वा तत्र पूर्ववत्
धामगृहगृहस्तम्भद्वारमानादिमानतः  ४३

मृण्मयं निक्षिपेदप्सु दारुजं चाग्निना दहेत्
लोहजं वह्निना तत्र द्रुतं शुद्धं विगृह्यताम्  ४४

ग्रामादीनां गृहादीनां शालानां च विशेषतः
आरम्भव्यासदीर्घाभ्यां हीनं नेष्टं मुनीश्वरैः  ४५

समं वा योजयेत् तस्मादधिकं वाऽपि योजयेत्
युक्तितः परितो वाऽपि प्राग्वद्दिशि विवर्धयेत्  ४६

दक्षिणापरभागे तु वृद्धिदं वस्तुनाशनम्
गृहमालिकयोर्भूमिसंख्यामुपरि कल्पयेत्  ४७

सर्वथा नोचितं हीनं कुर्यादुक्तक्रमेण तु  ४७-२

आद्यारम्भेचाथवा जीर्णहीनाङ्गानां कल्पने पातने च
लिङ्गे बेरे स्फोटनाद्यङ्गहीने कुर्याद् बालस्थापनं पीठबन्धे  ४८

लयशशीलयपीठ त्रिचतुरंशकलाद्यकरं तु वा
गुणयुगेन्द्रियषरामुनिहस्तकैः प्रवर्मध्यमके तरुणालयम् ४९

भवनमूलतलाङ्घ्रिविशालतो द्विगुणकात्त्रिगुणमेति हि भित्तिः
भवन्शेषमधोगृहमानकं तदपि मराडपकं तु सभाऽपि वा ५०

तद्गर्भार्धं श्रेष्ठमर्धार्धकं तद्धीनं मध्येऽष्टांशके नन्दमानम्
लिङ्गायामं तुल्यनाहं सुवृत्तं कुर्याच्छत्राभं शिरःसूत्रहीनम् ५१

तिथिकराग्रजमादितयाङ्गुलाङ्गुलिविवर्धनया नवमानकम्
तरुणलिङ्गसमुन्नतकर्तृवद्गुणयुगांशकमासनवेशनम् ५२

भवति मूलतलेतरतुङ्गकं सममुतार्धकमुत्तममाधमम्
नवविधं वसुभागयुतेऽन्तरे तरुणलिङ्गसमुन्नतमीरितम् ५३

मुनिकराग्रजमादितयोदयं नयनमात्रविवर्धनया ततम्
नवविधं तरुणप्रतिन्मोदयं सकलकेऽसकलं च यथा कुरु ५४

अपि च मूल चलार्धकमुत्तमं तदनु धर्ममथांशमथान्तरे
नवविधं युगकद्वयभागिके तरुणबिम्बमुदीरितमार्चके ५५

अचलतुल्यविशालसमोदयं वरमधोङ्घ्रिविहीनकमाधमम्
वसुविभागयुते तु तदन्तरे नवविधं विपुलोदयमासने ५६

उपललोहकुजे तरुणालयेष्वभिहितास्तरवोऽपि च बालके
सरलकालजचन्दनसालका खदिरमारुदपिप्पलतिन्दुकाः ५७

यावत्संप्रार्थितार्थं तदुदयसमये मूलहर्म्यं प्रकल्प्य
तस्मिन्नुक्त्वा विधेयं सकलमपि वरं स्थापयेद् बालधाम्नि
द्विष्षट्संवत्सरान्तं तरुणभवनकं तद्वरं नेष्टमाद्यै-
रन्येषां कर्मणां स्यात्तदवधिरधिकं सर्वदोषप्रदं तत् ५८

प्रासादानां लिङ्गपीठार्चकानां दोषाढ्यानां ग्रामवस्त्वादिकानाम्
एवं प्रोक्तं चानुकर्मण्यवश्यं प्रोक्तादन्यत्सर्वदोषप्रदं तत् ५९

इति मयमते वस्तुशास्त्रे अनुकर्मविधानं नाम पञ्चत्रिंशो ऽध्यायः

## अथ षड्त्रिंशोऽध्यायः

ब्रह्मादीनां च विन्यासं देवीनां वर्णमायुधम्
वाहनं भूषणं केतुर्विमानं वक्ष्यते क्रमात् १

चतुर्मुखश्चतुर्बाहुः तप्तकाञ्चनसन्निभः
विद्युद्दामपिशङ्गार्चिजटामकुटबन्धनः २

कुण्डली चाङ्गदी हारी मृगचर्मोत्तरीयकः
उत्तरीयोपवीतं च गलान्ते सन्निवेशयेत् ३

बभ्रूरू मौञ्जिकाधारः शुक्लमाल्याम्बरः शुचिः
अक्षमाला च कूर्चश्च दक्षिणे तु करद्वये ४

कमण्डलुकुशौ वामे स्रुक् स्रुवं वाऽथ दक्षिणे
आज्यस्थालीं कुशं वाऽपि वामहस्ते प्रदापयेत् ५

वरदाभयहस्तो वा जटामुकुटमण्डितः
वामभागे तु सावित्री भारती दक्षिणेंऽशके ६

ऋषयः परिवारास्तु हंसारूढः कुशध्वजः
आसीनो वा स्थितो ब्रह्मा पद्मासनमुदाहृतम् ७

विष्णुः किरीटमुकुटकेयूरर्कटकान्वितः
भूषितः कटिसूत्राद्यैः पीतवासाश्चतुर्भुजः ८

वरदाभयहस्तश्च शङ्खचक्रधरः शुचिः
आसीनो वा स्थितो वाऽपि वामेऽवामेऽवनी रमा ९

पीठस्थो वाम्बुजस्थो वा श्यामवर्णोऽच्युतः प्रभुः
ग्रामादिवस्तुमध्ये च दिक्ष्वष्टासु प्रशस्यते १०

श्रीलक्ष्मी भूमिसोद्धासी वक्ष्यते कमलेक्षणः
एकबेरं मुमुक्षूणां स्थापनीयं विचक्षणैः ११

ध्वजं च वाहनं चापि गरुडः समुदीरितः
वरदाभयहस्तौ च भुजोद्धृतवसुन्धरा १२

पादाक्रान्तोरगाधीशस्तप्तकार्तस्वरप्रभः
पीतयज्ञोपवीतश्च सर्वालंकारसंयुतः १३

प्रोक्तो वराहमूर्तिस्तु प्रलयाम्बुदसन्निभः
गर्भभित्तिमुपाश्रित्य पञ्चायुधवपुः स्थितः १४

त्रिविक्रमो वामनश्च नारसिंहश्च वैष्णवः
सिंहवक्त्रोऽतिनीरूक्षश्चोग्रदंष्ट्रो महाबलः १५

कुटिलौ मांसलौ चोरू रोममालासमन्वितः
सकुण्डलः स्थूलजिह्वा करण्डमुकुटोज्वलः १६

श्वेतवर्णो महाकायो माङ्गल्यश्चण्डवेगवान्
दशहस्तोऽष्टबाहुर्वा तीक्ष्णदन्तनखान्वितः १७

पीतयज्ञोपवीतश्च पुष्पमाल्यैरलङ्कृतः
हारकेयूरकटककटिसूत्रादिभिर्युतः १८

रक्तवस्त्रधरो देवो हस्तौ युद्धे निरायुधौ
हिरण्यो रःस्थलासक्त विदारणकरद्वयः १९

आसीनश्चोक्तमार्गेण सर्वदेवाभिवन्दितः

पर्वताग्रे गुहायां वाप्यरण्ये रिपुमण्डले २०

स्थापितो रिपुनाशाय नारसिंहो विपश्चिताम्
ग्रामादिषु चतुर्बाहुःशङ्खचक्रधरः प्रभुः २१

सर्वालङ्कारसंयुक्तः पीतवस्त्रधरः शुचिः
स्थाप्यो नरहरिर्वायौ स्थितो वासीन एव वा २२

पट्टिकोद्बलजङ्घोर्ध्वजान्वोपरिनूभुजद्वयम्
दण्डहस्तोऽभयो वान्यद् योगपट्टेन वेष्टयेत् २३

वरदाभयहस्तं तु स्थानकं पद्मपीठके
शान्तिपुष्टिजयारोग्यभोगैश्वर्यधनैधनम् २४

सुप्तरूपं तु कर्तव्यमा नन्तरूपतल्पके
त्रिमेखलसमायुक्ते पञ्चसप्तफणान्विते २५

पूर्वस्मिन्दक्षिणे वाऽपि शिरोयुग् द्विभुजः प्रभुः
दक्षिणस्थो दण्डभुजः शिरोधरभुजोऽथवा २६

सपुष्पो वामहस्ते तु योगनिद्रासुभद्रकः
सितपीताञ्जनश्यामसन्निभस्तु चतुर्युगे २७

कृतादिषु क्रमेणैव पूर्ववद् भूषणादिकम्
नाभिजन्माम्बुजे धाताप्यासीनस्तु समाहितः २८

श्रीभूमा पुष्पहस्ते च स्थापितव्ये शिरोङ्घ्रिके
देवस्य पार्श्वतः पुष्पमन्यज्ञानुप्रसारितम् २९

शयनं वामपादं तु श्रियो भूम्यास्तु दक्षिणे
शङ्खचक्रगदा शार्ङ्गखड्गाः सकलरूपिणः ३०

शङ्खास्त्रेशः सितो भूतश्चक्रो रक्तनिभः पुमान्
गदा स्त्री हेमसंकाशा शार्ङ्गः कृष्णपुमान्भवेत्  ३१

खड्गा श्यामलवर्णा स्त्री सर्वभूषणभूषिता
वामस्था सूचयो वामे दक्षे चोद्यतपाणयः  ३२

नानावर्णाम्बराः सर्वे स्वमूर्ध्नि न्यस्तहेतयः
मधुकैटभकौ पार्श्वे स्थापितव्यौ च रोषितौ  ३३

सुरेन्द्रः प्राङ्मुखो देवैरन्यैर्वा सुमहर्षिभिः
ग्रामादिवास्तुमध्येवा बाह्ये दिक्षु विदिक्ष्वपि  ३४

स्थापनीयो हरिर्युक्त्या सर्वेषां हितकांक्षिभिः
पिशङ्गोर्ध्वजटाभासः काञ्चनाग्निसमप्रभः  ३५

घनोरू रश्मिसंघातचन्द्राङ्कितजटाधरः
चतुर्भुजस्त्रिनेत्रश्च सौम्यो बृंहित यौवनः  ३६

व्यूढोरस्को वृषारूढः शृङ्खलाङ्कुशपाशभृत्
पीनस्तुङ्गभुजो पाणी हस्त्यात्मा हारनूपुरः  ३७

कटकं कटिसूत्रं च कुण्डलं नागनिर्मितम्
मेखलोदरबन्धं च पुण्डरीकाजिनाम्बरः  ३८

दशहस्तोऽष्टबाहुर्वा सर्वालङ्कारसंयुतः
दक्षिणे शक्तिशूलासि गदाप्रज्वलनाङ्गवान्  ३९

वामेऽपि नागखट्वाङ्गं खेटकं च कपालकम्
नागपाशं प्रसन्नस्तु व्याघ्रचर्माम्बरः शिवः  ४०

गदासिहीनहस्तःसन् अष्टबाहुर्महेश्वरः

आसीनो वा स्थितो वाऽपि वृषारूढो वृषध्वजः ४१

नृत्तवाद्यादिमुदितनृत्तभृङ्ग्यनु पूर्वकः
नन्द्यादिगणसंयुक्तः सुरव्रातनिषेवितः ४२

ग्रामे वा नगरे वाऽपि स्थापनीयो हितैषिभिः
सुखासनं विवाहं चाप्युमास्कन्दं परं तथा ४३

वृषारूढं पुरारिं च नृत्तं वै चन्द्रशेखरम्
अर्धनारिं च विष्णवर्धं चण्डेशानुग्रहं परम् ४४

कामारिं कालनाशं च दक्षिणामूर्तिकं तथा
भिक्षाटनं मुखलिङ्गं लिङ्गसंभूतरूपकम् ४५

षोडशप्रतिमाकारं वक्ष्येऽहं विधिना क्रमात्
त्रिनेत्रं च चतुर्बाहुं बालेन्दुकृतशेखरम् ४६

व्याघ्रचर्माम्बरं चैव हारकेयूरभूषितम्
यज्ञोपवीतसंयुक्तं कुण्डलाभ्यामलङ्कृतम् ४७

एवं षोडशमूर्तीनां सामान्यं समुदीरितम्
अतः परं पृथग्रूपं क्रमशो वच्यतेऽधुना ४८

आसने तु सुखासीनं वरदाभयहस्तकम्
दक्षिणेऽदक्षिणे हस्ते टङ्ककृष्णं प्रयोजयेत् ४९

शयितं वामपादं तु दक्षिणं पीठलम्बितम्
अनुक्तं पूर्ववत्सर्वमेवमुक्तं सुखासनम् ५०

इदं पूजाविधौ चैव निश्चयं मोक्षसिद्धिदम्
किञ्चित् त्रिभङ्गिकं कायं वामपादं तु कुञ्चितम् ५१

देवस्य दक्षिणं हस्तं देव्या हस्तेन संयुतम्
वरदं वामहस्तं तु कृष्णापरशुसंयुतम्  ५२

सर्वाभरणसंयुक्तं क्षौमवस्त्रधरं हरम्
देवस्य बाहुमात्रेण देवी कार्या द्विबाहुका  ५३

द्विनेत्रा चारुवदना श्यामवर्णा तु कोमला
किञ्चिद् वक्रां तु केयूरकटकैरङ्गुलीयकैः  ५४

करण्डिकाभमौल्यङ्गां सर्वाभरणभूषिताम्
दुकूलवसनां गौरीमुत्पलन्वितपाणिकाम्  ५५

नूपुराद्यैर्ज्वलत्पादपङ्कजां दक्षिणे न्यसेत्
लक्ष्मीं हिरण्यवर्णां च द्विभुजां च द्विलोचनाम्  ५६

सर्वाभरणसंयुक्तामुमापार्श्वे तु कारयेत्
शिला वा विष्णुमूर्तिर्वा जलधारां तु दापयेत्  ५७

षोडशाम्बुजके ब्रह्मा विवाहहोमसम्मुखः
कल्याणं कारयेदेवं सर्वदेवगणान्वितम्  ५८

सुराद्यादिसुपूज्यं च सर्वमङ्गलसिद्धिदम्  ५८-२

अर्धचन्द्रासनं देवं वामाङ्गस्थितगौरिकम्
उमासहितहस्तं तु देव्या हस्तोपगूहितम्  ५९

उमामहेश्वरं रूपं पूर्वोक्तस्वस्वरूपकम्
देवस्य वामपार्श्वे तु देवीं कुर्याद् विचक्षणः  ६०

उमाशङ्करयोर्मध्ये स्कन्दं  बालरूपकम्
सुखासनं युक्त्या कुर्यादुमास्कन्दान्वितं भवेत्  ६१

उमास्कन्दस्य देवस्य सर्वकामार्थसिद्धिदम्
उमेश्वरौ स्थितौ पीठे वृषभं पृष्ठतः स्थितम्  ६२

वृषमस्तकदेशे तु न्यस्तव्यं वामकूर्परम्
लम्बितं दक्षिणं हस्तं शूलं वामे यथोचितम्  ६३

कृष्णापरशुसंयुक्तं वृषारूढं समीरितम्
पूजा दारिद्र्यनाशार्थं सर्वप्राणिहितावहम्  ६४

सुस्थितं दक्षिणं पादं वामपादं तु कुञ्चितम्
धनुर्बाणसमायुक्तं कृष्णापरशुसंयुतम्  ६५

वृषभस्यन्दनस्थानं सर्वदेवगणान्वितम्
उमया सहितं देवं कुर्याद् वै त्रिपुरान्तकम्  ६६

वैरिनाशार्थकं पूज्यं कुर्यात् त्रिपुरसुन्दरम्
नृत्तं भुजङ्गललितं सन्ध्यानृत्तमिहोच्यते  ६७

डमरुं चापि वह्निं च दक्षिणेऽदक्षिणे करे
त्रिशूलं परशुं खड्गं बाणं स्याद् दक्षिणे करे  ६८

खेटकं च पिनाकं च दण्डं पाशं च वामतः
चारुचारीप्रचारेण प्रज्वलच्चरणान्वितम्  ६९

दक्षिणं कुञ्चितं पादं वामं जान्वन्तमुद्धृतम्
जानुबाह्यादिपार्ष्ण्यन्तमेकादित्रिमुखान्तरम्  ७०

तदन्तरेऽष्टभागे तु नवधा निर्गमं मतम्
निर्गमं वामपादं तु युक्त्या तत्र प्रयोजयेत्  ७१

ऋज्वागतमुखं किञ्चित्कायं वै सत्रिभङ्गिकम्

साभयं दक्षिणं हस्तमङ्गुष्ठान्तं स्तनान्तकम् ७२

उद्यड्डमरुकं हस्तं कर्णचूल्यन्तमुद्धतम्
गजहस्तोपमं वामं वामपादान्तिकं गतम् ७३

साग्निवामकरं बाहुमात्रोच्चं कारयेत् सुधीः
बाहुकक्षान्तरं तावत् व्याघ्रचर्मधरः समः ७४

वामेऽवामे फणी कृत्वा न्यसेद् वामेऽभयं तु वा
संविकीर्णजटाभारं बकपक्षविचित्रितम् ७५

करोटिमालया युक्तं जटाजूटसचन्द्रकम्
संविकीर्णजटासंख्या पञ्चसप्तनवोदिता ७६

वामे गौरी त्रिभागे तु अवामे नन्दिकेश्वरः
नृत्तवाद्यादिमुदितौ नृत्तभृङ्गी च पूर्वकम् ७७

देवदानवगन्धर्वसिद्धविद्याधरान्वितम्
पार्श्वयोर्मुनिभिर्युक्तं सुरबृन्दनिषेवितम् ७८

पीठस्थोऽथाम्बुजस्थो वा स्थापयेत् तन्निरन्तरम्
पादाधारमपस्मारं भुजङ्गत्रासमीरितम् ७९

नृत्तपूजाफलं सद्यः शत्रुनाशकरं भवेत्
ऋज्वागतस्थितं देवं वरदाभयहस्तकम् ८०

कृष्णापरशुसंयुक्तं कर्तव्यं चन्द्रशेखरम्
उमया सहितं साममैशमर्धं तु दक्षिणे ८१

अतिपीतजटाभारमुकुटं सुविचित्रितम् ८१-२

वामोमार्धं सधम्मिल्लं सीमन्तं तिलकालकम्

कुण्डलं दक्षिणे कर्णे वासुकिं च व्यवस्थितम्  ८२

ताडिकं वामके दद्यात् पालिकां च प्रदापयेत्
कपालं दक्षिणे हस्ते शूलं टङ्कं क्रमेण वा  ८३

सोत्पलं वामहस्तं तु केयूरकटकान्वितम्
पवित्रमक्षसूत्रं च वामेऽवामे प्रयोजयेत्  ८४

सहारं कन्धरार्धं तु वामे साग्निं च दक्षिणम्
स्तनयुक्तमुमार्धं तु दक्षिणं वृद्धवक्षसम्  ८५

श्रोण्यर्धदक्षिणे शम्भोर्व्याघ्रचर्मकृताम्बरम्
उमार्धं कटिसूत्रं च चित्रवस्त्रपरिच्छदम्  ८६

पादौ च देवदेव्योश्च समपद्मोपरिस्थितौ
नूपुरालङ्कृत किञ्चित्कुञ्चितं वामपादकम्  ८७

साङ्गुलीयं तथा देव्या भूषितं वामपादकम्
चतुर्भुजं तु वा देवमुमार्धं शुकसंयुतम्  ८८

ईशार्धं रक्तवर्णं तु श्यामवर्णमुमार्धकम्
अर्धनारीश्वरं रूपं कुर्याद् विद्वान् सलक्षणम्  ८९

विष्ण्वर्धमीश्वरार्धं च पूर्ववत् परिकल्पयेत्
शङ्खदण्डं तु कृष्णार्धे शूलटङ्कं शिवार्धतः  ९०

स्वस्वाभरणसंपूर्णं समपद्मोपरि स्थितम्
विष्णुशङ्करयोरर्धं वामदक्षिणभागतः  ९१

प्रत्यालीढस्य देवस्य चण्डेशं पार्श्वतो न्यसेत्
प्रकोष्ठे परशुं कृत्वा हृदयाञ्जलिहस्तकम्  ९२

पुष्पमालासमायुक्तमत्यन्तोर्जिततेजसम्
चण्डेश्वरप्रसादं तु रूपम् कामारिरुच्यते ९३

देवस्य पार्श्वतः कुर्यात् कामं रूपं प्रवक्ष्यते
पर्यङ्कबन्धमालीनमङ्के क्षिप्तोर्ध्वपाणिकम् ९४

कामारिमुग्ररूपं तु कारयेल्लक्षणान्वितम्
उद्धृतं दक्षिणं पादं वामपादं तु कुञ्चितम् ९५

दक्षिणे तु करे शूलं परशुं वामबाहुके
दक्षिणे नागपाशं तु वामहस्तं तु सूचितम् ९६

कालसंहृदये पादं शूलं कुर्यादधोमुखम्
कालनाशवपुः प्रोक्तमुग्ररूपं तु चण्डधृक् ९७

संदंशमक्षमाला च दक्षिणेऽदक्षिणे करे
पुस्तकं ज्वलनं कुर्याच्छ्वेतवर्णं त्रिलोचनम् ९८

पिङ्गवर्णावृता लम्बिकेशभारं सचन्द्रकम्
करोटिकार्कधुर्धूरपुष्पयुक्तं हि सादितम् ९९

दक्षिणोरूपरिष्टात् तु शयितम् वाममङ्घ्रिकम्
पादाधारमपस्मारं कुर्यात् पीठे समन्वितम् १००

पार्श्वयोर्मुनिभिर्युक्तं दक्षिणामूर्तिरूपकम्
पर्वताग्रस्थितं देवं मृगपक्षिमुनीश्वरम् १०१

भिक्षाटनं प्रकर्तव्यं नग्नरूपं त्रिलोचनम्
चतुर्भुजसमायुक्तं पिञ्छं वामे कपालकम् १०२

हरिण्यास्यगतं हस्तं सव्यं डमरुकोद्धृतम्

पादं पादुकसंयुक्तं देवं वै गमनोन्मुखम्  १०३

अथवाऽष्टचतुर्बाहुः षड्भुजो वा महेश्वरः
मणिभिः शङ्खजैर्नागैर्भूषितस्त्वहिकुण्डलः  १०४

पालिकं वामे पत्रं वा क्षुरिकालंकृता कटिः
व्याघ्रचर्माम्बरो देवः श्वेतवर्णस्त्रिलोचनः  १०५

पादुकालङ्कृतं पादं तुटिकार्धान्वितः करः
सर्वालङ्कृतिसंयुक्तः सर्वभूतगुणान्वितः  १०६

विभ्रमस्त्रीगणावृतः कङ्कालश्चारुवेषभाक्
मुखलिङ्गमथो वक्ष्ये सर्वकामप्रसिद्धये  १०७

धर्मांशे तु शिवायामे विष्कम्भे तु त्रिभागिके
स्कन्धं द्व्यंशे गलं भागं त्रिभागं मुखमिष्यते  १०८

उष्णीषमंशकं द्व्यंशं मकुटं लिङ्गमंशतः
भागेन मुखविष्कम्भं चोर्ध्वलिङ्गविशालकम्  १०९

विष्णोः पितामहस्यापि तौ भागावार्षधर्मके
ललाटचन्द्रकास्योष्ठ घ्राणानि नयनानि च  ११०

कर्णगण्डस्तथाद्यङ्गं यथोक्तं सकले तथा
मानोन्मानप्रमाणेन प्रकुर्याच्छास्त्रवित्तमः  १११

चतुर्णामपि वक्त्राणामलङ्कारमथोच्यते
त्रिनेत्रं सस्मितं वक्त्रं पूर्वं तत्पुरुषाह्वयम्  ११२

चन्द्राङ्कितजटाजूटं कुङ्कुमद्रवसंनिभम्
नक्रकुण्डलसंयुक्तं पद्मपत्रवदीक्षणम्  ११३

अघोरं दक्षिणं वक्त्रं सिंहाक्षं सिंहनासिकम्
राजावर्तनिभच्छायं फणिकुण्डलमण्डितम्  ११४

ससर्पप्रोतनं तुण्डं चन्द्राङ्कित जटाभरम्
सदंष्ट्रं स्थूलजिह्वं च पिङ्गश्मश्रु त्रिलोचनम्  ११५

प्रसन्नं वारुणं वामं रत्नकुण्डलमण्डितम्
सार्धेन्द्वहिजटाजूटं पूर्णचन्द्रनिभं मुखम्  ११६

सद्योजाताह्वयं सौम्यं बन्धूककुसुमप्रभम्
चन्द्राङ्कितजटाजूटं तिलकालकसंयुतम्  ११७

युवत्याभरणोपेतं वक्त्रं धम्मिल्लकोज्ज्वलम्
एकद्वित्रिचतुर्वक्त्रमेवं लिङ्गं प्रकीर्तितम्  ११८

सर्वाभरणसंयुक्तं षण्मुखं कुङ्कुमच्छविम्
देव्यौ गजा च वल्ली च पीतश्यामनिभे कृते  ११९

सर्वाभरणसंयुक्ते वामेऽवामे प्रयोजयेत्
ग्रामादिवस्तुमध्ये च चतुर्दिक्षु प्रशस्यते  १२०

वीथ्यग्रे वीथिमध्ये वा ऐशान्यामपि वर्धयेत्
भोगार्थं पश्चिमे न्यस्य मोक्षार्थं मध्यमेऽस्य तु  १२१

गजाननस्त्वेकदन्तः समस्थस्तु त्रिलोचनः
रक्तवर्णश्चतुर्बाहुर्भूतरूपो महोदरः  १२२

नागयज्ञोपवीतस्तु घनपिण्डोरुजानुकः
पद्मासनोपरिष्टात् तु वामाङ्घ्रिशयितं तथा  १२३

दक्षिणं कुञ्चितं पादं वामावर्ताङ्गुलीयकम्

स्वदन्तमङ्कुशं कुर्याद् दक्षिणे करद्वये १२४

वामद्वयेऽक्षमालां च लड्डुकं च प्रदापयेत्
करण्डिकाभमौल्यङ्गो हाराद्याभरणान्वितः १२५

एवं गणाधिपः प्रोक्तः स्थितो वा पद्मपीठके
नृत्ते च षट्चतुर्बाहु सकेतुराखुवाहनः १२६

सैकचक्रं तु सप्ताश्वम् अरुणाग्रं महारथम्
हस्तद्वये च कमलं कञ्चुकच्छन्नवक्षसम् १२७

अकुञ्चितसुकेशं तु प्रभामण्डलमण्डितम्
कोशवेष्टनयुक्तं वा स्वर्णरत्नविभूषितम् १२८

मकुटं वा विधातव्यमन्यत्सर्वं सुमण्डनम्
एकवक्त्रं द्विदोर्दण्डं स्कन्धासक्तकराम्बुजम् १२९

कृत्वा तु स्थापयेत् सूर्यं पुरुषाकृतिरूपिणम्
हयारूढं च कुर्वीत पद्मथं वार्चनार्हकम् १३०

देव्युषां श्यामवपुषीं हेमवर्णां च प्रत्युषाम्
जातिहिङ्गुल्यवर्णे तु स्थापयेत् सूर्यमण्डले १३१

चतुर्बाहुर्द्विबाहुस्थरक्तपद्मविभाजितः
द्विहस्तावपरौ बाहू अभयवरदान्वितौ १३२

द्विहस्तश्चारुणश्चैव सारथिः स रथे स्थितः
सर्वलोकैकजीवात्मा देवो हीनतनुः सदा १३३

ब्रह्मविष्णुशिवाद्यश्च स्थापनीयो दिनेश्वरः
देवी प्रभा च सन्ध्या च वामदक्षिणपार्श्वके १३४

ग्रहादिपरिवारास्तु त्रिपञ्चावरणाः कृताः
उत्सवे नित्य पूजायामागमप्रोक्तवद्विधिः १३५

ध्वजं च वाहनं वाऽपि सिंहमेव प्रकीर्तितम्
वज्रपाणिर्महाबाहुः सिंहस्कन्धो विशालदृक् १३६

किरीटी कुण्डली हारी केयूरी गजवाहनः
द्विभुजः श्याम वर्णस्तु रक्ताम्बरधरः सुखी १३७

सर्वाभरणसंयुक्ता ललाटोरः स्थलाङ्घ्रयः
विशालाक्षः पृथुग्रीवो देवराजः शचीपतिः १३८

वृद्धरूपो भवेदग्निरर्धचन्द्रासनस्थितः
उज्ज्वलत्काञ्चनज्योतिः पिङ्गभ्रूः पिङ्गलोचनः १३९

हेमकूर्चालसदृशं तद्रूपं तु शिरोरुहम्
बालार्कसदृशं वस्त्रमुपवीतं च तादृशम् १४०

अक्षमाला च करकं दक्षिणेऽदक्षिणे करे
सप्तायुधं च सप्तार्चिर्जटालोद्भासरूपकम् १४१

ज्वालामालाकुलं दीप्तं पार्श्वस्थमंशुमण्डलम्
मेषारूढं च कुण्डस्थं योगपट्टेन वेष्टितम् १४२

दक्षिणे शयिता स्वाहा रत्नकुण्डलभूषिता
सर्वयागहितं पुण्यं पिङ्गभूषणभूषितम् १४३

दण्डपाणिः पाशहस्तो दीप्ताग्निसमलोचनः
महामहिषमारूढो नीलाञ्जनवपुप्रभः १४४

पार्श्वयोरात्मसदृशैः पुरुषैरुपजीविभिः

पीनवक्षःस्थलैर्दिव्यैः संहारैर्बलवत्तरैः १४५

द्वारे स्मुत्थितैः क्रुद्धैः सर्वलोकभयङ्करैः
चित्रगुप्तः कलिश्चेति दक्षिणोत्तरपार्श्वकौ १४६

कृष्णश्यामनिभौ रक्तवस्त्रकौ तौ समाहितौ
पीठपार्श्वस्थितौ मृत्युसहितावुग्रतेजसौ १४७

नीललोहितसङ्काशे द्विपार्श्वे चामरस्त्रियौ
वामदक्षिणपार्श्वस्थे धर्माधर्मासमाह्वये १४८

आसीनश्च मया प्रोक्तो महिषध्वजवाहनः
निर्ऋतिस्तु विशालाक्षः खड्गहस्तो महाभुजः १४९

पीतवासाः शवारूढो नीलहर्णो महाबलः
सर्वालङ्कारसंयुक्तश्चासहायो जगत्पतिः १५०

शङ्खकुन्देन्दुधवलः पाशहस्तो महाबलः
हारकेयूररुचिरकुण्डलाभ्यामलङ्कृतः १५१

पीतवासा असदृशः सुवर्णः सर्वनन्दनः
आसीनो वा स्थितो वाऽपि मकरे वरुणः स्मृतः १५२

ध्वजहस्तो महावीर्यस्ताम्राक्षो धूमसन्निभः
कुञ्चितभ्रूयुगो वायुः शबलाम्बरभूषितः १५३

मृगारूढो विधातव्यः सर्वाभरणभूषितः
कुबेरं सर्वयक्षेशं मकुटाद्यैरलंकृतम् १५४

तप्तकाञ्चनसङ्काशं वरदाभयपाणिकम्
मेषारूढं गदापाणिं द्विपादं च द्विपाणिकम् १५५

शङ्खपद्मनिधी त्वेवं वहन्तं नरवाहनम्
सर्वालङ्कारसंयुक्तं सदेविं कारयेद् बुधः १५६

चन्द्रः सिंहासनासीनः कुन्दशङ्खनिभद्युतिः
प्रभामण्डलसं युक्तो द्विभुजः श्वेतवस्त्रकः १५७

आसीनो वा स्थितो वाऽपि कुमुदप्रज्वलत्करः
हेमयज्ञोपवीतांशुः सौम्यः सोमो हृताहृतः १५८

शुक्लमाल्याम्बरो हैमसन्निभो रक्तलोचनः
रेवती रोहिणी चैव सस्याङ्कुरसमन्विते १५९

भासद्राजीवनयने कृष्णाम्बरधरे शुची
चामरव्यग्रहस्ते द्वे निशा ज्योत्स्ने च पश्चिमे १६०

शशिनस्तु निशागौरी ज्योत्स्ना जनरुचिः स्मृता
वृषारूढो महातेजा धवलो धवलेक्षणः १६१

त्रिशूलपाणिर्लोकेशस्त्रियक्षो लोकशङ्करः
कामो हेमनिभः सम्यक् सर्वाभरणभूषितः १६२

द्विबाहुः सौन्दराकारः सौम्यः प्रथमयौवनः
पीठस्थो वा रथस्थो वा सर्वलोकसमर्चितः १६३

हैमो मदश्च रागश्च वसन्तस्तस्य बान्धवाः
तापनी दाहिनी सर्वमोहिनी विश्वमर्दिनी १६४

मारणी कामिनीदंष्ट्रास्तस्य पञ्चशरा इमे
इक्षुचापेषुपञ्चैव पश्चिमे परिकीर्तिताः १६५

रतिः स्याद्दक्षिणे पार्श्वे पूर्वः श्यामसमच्छविः

सर्वाभरणसंयुक्ता केशभारसमुज्ज्वला १६६

एवमुक्तः स्मरस्तस्य मकरध्वज इष्यते
एवं सिंहासना सीनौ ह्यश्विन्यौ ह्यश्वरूपकौ १६७

दाडिमीपुष्पसङ्काशावुभयांसोपवीतिनौ
चिकित्सकौ च तौ कुर्यात् स्त्रियोर्द्वन्द्वं सचामरम् १६८

पीतरक्तनिभे कार्ये मृत सञ्जीवनी च ते
पृष्ठे विशल्यकरणी द्वे स्त्रियौ पीतपिङ्गले १६९

वामे धन्वन्तरिश्चैवमात्रेयश्च तथैव च
पीतरक्तनिभौ चैतौ विधेयौ कृष्णवाससौ १७०

खड्गखेटकहस्तास्ते सर्वाभरणभूषिताः
द्विभुजा रक्तवर्णास्तु पीताम्बरधराः शुचिः १७१

आसीना वा स्थिता रौद्रा वसवोऽष्टौ प्रकीर्तिताः
धरो ध्रुवश्च सोमश्च आपश्चैवानलोऽनिलः १७२

प्रत्यूषश्च प्रभावश्च वसवोऽष्टौ प्रकीर्तिताः
रूपाङ्गनास्तनापेष्यकेशभार्समन्विताः १७३

दिव्यपुष्पधराः सर्वे दुकूलवसनान्विताः
अष्टौ मरुद्गणाः प्रोक्ताः सर्वयागेषु योग्यकाः १७४

रुद्रा रुद्राग्निभा नीललोहिताद्या दिवौकसः
जीमूतकुङ्कुमाभास्ते भिन्नाञ्जननिभास्तु वै १७५

चतुर्भुजास्त्रिनेत्राश्च टङ्कशूलजटाधराः
वरदाभयहस्ताश्च क्षौमवस्त्रधराः शुचिः १७६

अनन्तश्चैव सूक्ष्मश्च शिवोत्कृष्टैकनेत्रकौ
एकरुद्रस्त्रिमूर्तिश्च श्रीखण्डश्च शिखण्डिकः १७७

अष्ट विद्येश्वराः प्रोक्ताः सर्वयागसमन्विताः १७७-२

तामसं कृष्णवर्णं तु प्रलयाम्बुदसन्निभम्
सात्विको द्विचतुर्बाहू राजसः षड्भुजो भवेत् १७८

तामसोऽष्ट प्रोक्तः संस्थानानि च गोचरे
कपालशूलं द्विभुजं खट्वाङ्गश्च परश्वथ १७९

चतुर्भुजक्रमाद् वाऽथ वरदाभयपाणिकम्
दक्षिणस्थास्तु शूलासि घण्टायुक्तास्तु वामके १८०

खेटकं च कपालं च नागपाशमुदीरितम्
अष्टहस्ते धनुर्बाणयुक्तं पूर्वोक्तहेतिभिः १८१

रक्तवर्णगुणोपेत ऊर्ध्वकेशश्चलान्वितः
कुञ्चितभ्रूस्त्रिनेत्रस्तु घोरदन्तद्वयान्वितः १८२

मार्गान्तगणसंरक्षो बालरूपः श्ववाहनः
ग्रामादिवस्तुबाह्ये तु द्वारे वारण्यके गिरौ १८३

प्रागीशानदिशो भागे पर्जन्ये च दितौ क्रमात्
स्थाप्य पद्मासनासीनं सर्वकामफलप्रदम् १८४

षड्चतुर्भुजगं वा मपरे सति
श्वकुक्कुटादिभिः सेव्यः सिद्धैर्योगिनिवेष्टितम् १८५

चण्डेश्वरः सुरक्तश्च श्वेतमिश्रच्छविः स्मृतः
द्विबाहुको दलावर्तमूर्धजः शङ्खपत्रयोः १८६

धृतयज्ञोपवीतस्तु शुक्लमाल्याम्बरः शुचिः
हृदयाञ्जलिसंयुक्तः टङ्कपाणिभुजस्थितः १८७

अर्धचन्द्रासनासीनः पुष्पमालावलम्बितः
सर्वाभरणसंयुक्तो जटी वा केशबन्धवान् १८८

द्विभुजाः पद्महस्ताश्च रक्तपद्मासनस्थिताः
रत्नकुण्डलसंयुक्ताः सर्वाभरणभूषिताः १८९

रक्ताम्बरधराः सर्वे भास्करा द्वादश स्मृताः
अर्यमादिश्च मित्रश्च वरुणांशो भगस्तथा १९०

इन्द्रो विवस्वान् पूषा च पर्जन्यश्च ततस्त्विति
ततस्त्वष्टा ततो विष्णु रजघन्यो जघन्यजः १९१

मुखसंदंशहस्तास्तु जटाजूटसमन्विताः
पीतवर्णास्तु वर्णानां वर्णानामम्बरान्विताः १९२

सप्तैते ऋषयः प्रोक्ता द्विभुजाः पिङ्गलोचनाः
पीतवर्णाः सुवृद्धाश्च रक्तवस्त्रानुकारिताः १९३

केशभारसमायुक्ता नानाभरणभूषिताः
सुरूपाः स्वर्णवर्णास्तु नागभूषाः सिताम्बराः १९४

आसीना वा स्थिता वाऽपि रोहिण्यः सप्त कीर्तिताः
तार्क्ष्यो ना वृत्तरक्ताक्षः पीतवर्णो महाबलः १९५

द्विभुजः साञ्जलिर्वाऽथ किञ्चिदूर्ध्वोरुजङ्घिकः
कञ्चुकः पञ्चवर्णस्तु पक्षैर्युक्तस्तु सीसजैः १९६

सदंष्ट्रः श्याम नासाग्रः करण्डमकुटोज्ज्वलः

नागाभरणयुक् पीतपर्णैः संपूर्णकर्णकः १९७

रक्तवस्त्र धरश्चैव सर्पारिर्विष्णुवाहनः
मोहिनीतनयः शास्ता द्विभुजः श्यामसन्निभः १९८

पीठस्थः कुञ्चिताङ्घ्रिस्त्ववामपादं प्रलम्बितम्
गजहस्तोपमो वामबाहुर्जानूरुबाह्यतः १९९

मण्डलीभूतरूपो वा वक्रदण्डधरोऽथवा
स्निग्धनीलाञ्जना कीर्णाः कुण्डलीभूतमूर्धजाः २००

गजवाहनकेतुः सन् हाराद्याभरणान्वितः
नीलवर्णहयो वाऽथ वृषो वा वाहनध्वजः २०१

चतुर्भुजस्त्रियक्षो वा सर्वत्र कुक्कुटध्वजः
ज्ञानी योगासब्नासीनो सदाध्यायी पवित्रकः २०२

सोभयांसोपवीतस्तु युवा वीरासनान्वितः
उल्लासी गीतभावी स्यात् सुरभावी सुखासनः २०३

वामोरूपरिविन्यस्तावामाङ्घ्रिस्तु विराजितः
नवशक्तिसमा युक्तः वेष्टिताष्टाष्टयोगिनिः २०४

पूर्णा च पुष्कला देव्यौ वामदक्षिणभागतः
कृष्णहेमनिभे देव्यौ सौगन्ध्यपुष्पहस्तके २०५

सर्वाभरणसंयुक्ते पीतश्वेताम्बरे मते
वामे मधु करस्तस्य स्थापनीयो मधुच्छविः २०६

द्विभुजो मांसलो फुल्लवक्त्रः सल्लम्बितोदरः
शीधुपात्रं च दण्डं च वामेऽवामे प्रयोजयेत् २०७

दराडी च लाङ्गली तस्य द्वारस्थौ शक्तिधारिणौ
वर्णान्तराश्रमस्थाने वेश्यावासे च दुर्गमे २०८

निगमे खर्वटे खेटे विधातव्यः सुरप्रियः
ग्रामादिवास्तुमध्ये तु बाह्ये च द्वारदक्षिणे २०९

देवभावी ज्ञानभावी विधातव्यौ हितैषिभिः
नगरे पत्तने चैव गीतभावी विधीयते २१०

मातृणां लक्षणं वक्ष्ये स्थापनं स्थानमेव च
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा २११

वाराही च तथेन्द्राणी काली चाप्यन्तगामिनी
दक्षिणेतरपार्श्वस्थौ वीरभद्रविनायकौ २१२

वीरभद्रो वृषारूढः शूलहस्तो गदाधरः
वीणा हस्तोऽथवा कार्यो वरदाभयपाणिकः २१३

चतुर्भुजस्त्रिनेत्रश्च चन्द्राङ्कितजटाधरः
सर्वाभरणसंयुक्तः श्वेतवर्णो वृषध्वजः २१४

पद्मासनयुतो देवो वटवृक्षसमाश्रितः
लोकेशः शङ्करः शम्भुर्मातॄणामग्रतः स्थितः २१५

चतुर्वक्त्रा विशालाक्षी तप्तकाञ्चनसन्निभा
वरदाभयशूलाक्षमालाधरचतुर्भुजा २१६

रक्तपद्मासनासीना हंसवाहनकेतुका
ब्रह्माणी ब्रह्मवत्कार्या व्याघ्रचर्मसमाश्रिता २१७

त्रिनेत्रां रक्तवर्णां च शूलपाणिं वृषध्वजाम्

वरदाभयहस्तां तामक्षमालासमन्विताम्  २१८

जटा मकुटिणि शम्भोर्भूषणीं तु महेश्वरीम्
चन्दनद्रुमसंयुक्तां कारयेद् वृषवाहिनीम्  २१९

वासिकाबद्ध मकुटा शक्तिकुक्कुटधारिणी
रक्तवर्णा महावीर्या हारकेयूरभूषिता  २२०

वरदाभयहस्ता च कुङ्कमप्रभसन्निभा
सर्वाभरणसंयुक्ता मयूरध्वजवाहिनी  २२१

उदुम्बराश्रितां देवीं कौमारीं कारयेत् सुधीः
शङ्खचक्रधरां देवीं वरदाभयपाणिकाम्  २२२

सुस्थानां श्याम वर्णां तां पीताम्बरसुलोचनाम्
पिप्पलद्रुमसंयुक्तां गरुडध्वजवाहिनीम्  २२३

वैष्णवीं कारयेद् विद्वान् विष्णुभूषणभूषिताम्
वरदाभयहस्ता वा वाराही कृष्णसन्निभा  २२४

हलं मुसलकं धृत्वा चर्मवासः समन्विता
शङ्खवर्णा च वरदाभयदण्डकरान्विता  २२५

सदंष्ट्रां तु महाकाण्डां किरीटमकुटोज्ज्वलाम्
कृष्णाम्बरधरां देवीं सर्वाभरणभूषिताम्  २२६

करञ्जद्रुमसं युक्तां महिषध्वजवाहनीम्
किरीटमकुटां देवीं सर्वाभरणभूषिताम्  २२७

वरदाभयपाशाब्जपाणिकामिन्दुसन्निभाम्
कल्पकद्रुमसंयुक्तामिन्द्राणीं कारयेद् बुधः  २२८

कपालिनीं शूलधरां वरदाभयपाणिकाम्
अष्टहस्तं प्रकुर्वीत शूलकापालसंस्थितम्  २२९

वामे दण्डधनुः खड्गं खेटकं पाशबाणकम्
एते त्वष्टभुजाःह् प्रोक्ता दशहस्तं प्रकीर्तितम्  २३०

डमरुं शूलकं प्रोक्तं सर्वमुक्तं प्र्कीर्तितम्
रक्ताक्षिकुटिकासीना स्तनबन्धफणान्विता  २३१

शिरोमालोपवीता च शवारूढा कृशोदरी
निर्मांसव्यावृतमुखी दीर्घजिह्वा त्रिलोचना  २३२

व्याघ्रचर्माम्बरधरा ज्वालाकेशफणीष्टदा
काली कृशाङ्गी कृष्णा च वटवृक्षसमाश्रिता  २३३

दंष्ट्राकरालवदना चामुण्डी गृध्रकेतुका
विनायकस्य रूपं तु पूर्ववत् कारयेद् बुधः  २३४

ग्रामाणामुत्तराशायामैशान्यामतिदूरतः
व्याहृत्य शूलया वासा शूलाकारसमन्विताः  २३५

पूर्वास्यमुत्तरास्यं वा दिग्द्वारं तु समन्विता
ब्रह्मस्थान इमाः स्थाप्य दक्षिणादिक्रमेण तु  २३६

शान्तिपुष्टिजयारोग्यं भोगैश्वर्यायुर्वर्धयेत्
वामाद्याः शत्रुमादाय भवेयुस्ता न संशयः  २३७

पूर्वोदितविधाने तु ब्रह्माणी मध्यमे स्थिता
सर्वकाम्यमितीत्युक्तं प्रतिठा सर्वमोहना  २३८

चामुण्डीं मध्यमे स्थाप्य प्रतिष्ठायां प्रजाकरी

कामासनं तु योगं च शान्तं वीरासनं क्रमात्  २३९

सुखासने विधौ कुर्यात् सर्वकामफलप्रदम्
अथाष्टदशदोर्दण्डैर्द्विषट्षोडशबाहुकैः  २४०

चामुण्डीं कारयेद् विद्वान् दारुमृत्सुधयापि वा
नृत्तं वा युक्तितः कुर्यादष्टबाहुसमन्विताम्  २४१

सन्ध्यानृत्तसमीपे वा सन्ध्यानृत्तं यथा भवेत्
षट्चतुर्भुजहस्तं वा युक्तं लोकोपशान्तये  २४२

दौवार्यौ द्वारबाह्यस्थौ भूतौ शूलादिधारिणौ
रौद्रौ भूतगणैर्युक्तौ पिशाचैश्च  समावृतौ  २४३

मण्डपेऽभ्यन्तरे स्थाप्य नन्दरूपे सुयौवने
रक्तश्यामनिभे ते द्वे योगिन्यौ तु स्त्रियौ मतौ  २४४

कपालकास्थिसंयुक्तपाणिके व्यालकान्विते
ससीमन्तशिरोजन्म धम्मिल्लमकुटोज्ज्वले  २४५

सर्वाभरणसंपन्ने चारुवक्त्रे त्रिलोचने
तत्रैव भूतवेतालडाकिन्यादीनि विन्यसेत्  २४६

यामलं मन्त्रशास्त्रोक्तं नित्योत्सवं तु कारयेत्
लक्ष्मीः पद्मासनासीना द्विभुजा काञ्चनप्रभा  २४७

हेमरत्नोज्ज्वलं नक्रकुण्डलं शङ्खकुण्दलम्
सुयौवना सुरम्याङ्गा कुञ्चितभ्रूसविभ्रमा  २४८

आमण्डलमुखी कर्णपूरपद्मेक्षणान्विता
रक्तोष्ठी पीनगण्डा च कञ्चुकच्छादनस्तनी  २४९

शिरसो मराडनं शङ्खचक्रसीमान्तपङ्कजम्
पद्मं स्याद् दक्षिणे हस्ते वामे श्रीफलमिष्यते २५०

सुमध्यविपुलश्रोणिर्शोभनाम्बरवेष्टिता
मेखला कटिसूत्रं च सर्वाभरणभूषिता २५१

करराडकाभमौल्यङ्गा चासीना कमलासना
चामरव्यग्रहस्ते च तत्पार्श्वे तु स्त्रियावुभे २५२

स्नपयन्तौ कुम्भहस्तौ हस्तिनौ च प्रदर्शयेत्
अथ गेहार्चनायोग्या चतुर्बाहुसमन्विता २५३

वरदाभयहस्तं च सारुणाब्जसमप्रभा
सर्वाभरणसंपन्नां तप्तहेमोज्ज्वलप्रभाम् २५४

पर्यङ्कबन्धमासीनां श्वेतपद्मासनाञ्चिताम्
ईदृशीं कारयेल्लक्ष्मीमभीप्सितफलप्रदाम् २५५

यक्षिणी हेममाला तु लक्षणीया सलक्षणा
किं तु नागेन्द्ररहिता सिद्धाप्सरससेविता २५६

किन्नरुपगायन्ती यक्षगन्धर्वसेविता
अन्तर्बहिर्विधीयन्ते ग्रामादिषु च वास्तुषु २५७

कात्यायनी महिषस्य शिरच्छेदे समुद्यता
किरीटमकुटा सर्वभूषणा दशबाहुका २५८

शक्तिं बाणं च मुसलं शूलं खड्गं च चर्मकम्
वराखेटं पूर्णचापाङ्कुशं वामे क्रमात् तथा २५९

नागपाशं तु सर्वास्त्रैर्युक्तोद्यतकराम्बुजा

सुवस्त्रनीलकेशा च नीलोत्पलदलेक्षणा २६०

त्रिनेत्रा वा सुरम्याङ्गा पीनोन्नतपयोधरा
सुमध्या श्यामवर्णा च भुजङ्गस्तनबन्धना २६१

सिंहारूढा सिंहकेतुः सिंहयागाम्बरान्विता
कात्यायनी दशभुजा महिषस्य शिरः स्थिता २६२

चतुर्भुजयुता देवी पङ्कजासनसंस्थिता
वरदाभयहस्ता च शङ्खचक्रधरा स्मृता २६३

खेटकशक्तिहीनाष्टबाहुका शुकधारिणी
सादुर्गा दुर्गदेशे तु ग्रामादिषु विशेषतः २६४

शुक्लवर्णा जटामौलिश्चतुर्हस्ता सरस्वती
श्वेतपद्मासनासीना रत्नकुण्डलमण्डिता २६५

यज्ञोपवीतिनी चारुमुक्ताहारा सुलोचना
व्याख्यानमक्षसूत्रं च बिभ्रती दक्षिणे करे २६६

पुस्तकं कुण्डिकां चापि त्रिनेत्रा चारुरूपिणी
ऋज्वागतमुखी सर्वमुनिभिः सेविता वरा २६७

वस्तुमध्ये चतुर्दिक्षु स्थापनीया हितैषिभिः
लम्बोष्ठी तुङ्गनासी च लम्बमानस्तनोदरी २६८

ज्येष्ठा ज्येष्ठा महालक्ष्म्या लोहितोत्पलपाणिका
पीठासना कलेर्देवी पीठलम्बितपादुका २६९

रक्तवर्णाम्बरा श्यामवर्णामृतसमुद्भवा
सर्वाभरणसंपन्ना वासिकाबन्धशेखरी २७०

काकध्वजसमायुक्ता सारालतिलकान्विता
वृषाननः सुखासीनो दण्डपाणिर्महाभुजः २७१

श्वेतवर्णसुत स्तस्याः स धार्यो दक्षिणोत्तरे
सुस्तनी यौवनाङ्गा च सुवस्त्रा चारुलोचना २७२

कृष्णवर्णा सुता तस्याः सर्वाभरणभूषिता
द्वारे द्वारे यौवना वा स्थाने स्थाने च भित्तिभिः २७३

सस्याङ्कुरनिभा भूमी राजीवविपुलेक्षणा
तिलकालकसंयुक्ता सर्वाभरणभूषिता २७४

पुष्पहस्ता सुरूपा च करण्डमकुटोज्ज्वला
पीताम्बरधरा धात्री भूतानां पीठकासनम् २७५

प्रसन्नवदना सौम्यदृष्टिः सुन्दररूपिणी
सर्वाभरणसंपन्ना श्यामवर्णा द्विबाहुका २७६

दुकूलवसना पुष्पहस्ता सातिमनोहरा
चतुर्दिक्षु च मध्ये तु भल्लाटांशे तु पार्वती २७७

स्थापनीया सुसंपन्ना परिवारसमन्विता
सिद्धविद्याधरस्त्रीभिः सेविताभीप्सितार्थदा २७८

सप्तमाता बहिर्ग्रामान्नगराणां विधीयताम्
स्थूलदेहा महाकुक्षिः पार्श्वद्वयवधूद्वया २७९

श्यामवर्णा विशालाक्षी रक्तवस्त्रा द्विबाहुका
भूतप्रेतपिशाचादिसेविता या विशेषतः २८०

पर्यङ्कबन्धमासीनं बोधमङ्कोर्ध्वपाणिकम्

रक्तवस्त्रं द्विदोर्दण्डं रक्तवस्त्रोत्तरीयकम् २८१

पिङ्गवर्णाम्बरधरं त्यक्ताभरणमूर्ध्वजम्
सिंहासनोपरिष्टन्तु इन्द्राद्यैस्तु निषेवितम् २८२

यक्षैर्विद्याधरैः सिद्धैर्गन्धर्वाद्यैस्तथैव च
कारयेदीदृशं रूपमश्वत्थद्रुमसंयुतम् २८३

नीलाञ्जननिभं जैनमशोकद्रुमसेवितम्
स्थानकमासनमुक्तं सिंहपद्मासनान्वितम् २८४

पार्श्वबाहुः स्तनान्ते तु दृष्टिर्देवप्रमाणकम्
देवाङ्गुलेन त्रिंशद्वा चामरग्राहिमानकम् २८५

शेषं पूर्ववदुद्दिष्टं युक्त्या रूपं निरम्बरम्
सुराद्यैरमरैः सेव्यः त्रिच्छत्रेण समन्वितः २८६

पार्श्वबाहुलतारत्नं तत्तद्वर्णं द्विबाहुकः
यक्षेन्द्रकापराजितौ पार्श्वे कटयन्तशीर्षकौ २८७

कर्तव्यौ पूर्वमुक्तौ च शास्त्रज्ञैः शिल्पपारगैः
अन्यदेवश्च कर्तव्यः स्वस्वचिह्नं प्रदर्शयेत् २८८

लेखारूपाः स्वरूपाश्च नागाः सप्तत्रिभोगिकाः
राक्षसाश्च पिशाचाश्च रौद्रप्रकृतिरूपिणः २८९

प्रेताश्चैव ततः सर्वे भूतवेतालजातयः
यथा योगं विधातव्या सर्वे सर्वेष्टवास्तुके २९०

एवं संक्षेपतः प्रोक्तं प्रतिमालक्षणं मया २९१

यजमानसमोत्सेधं श्रेष्ठमष्टांशहीनकम्

मध्यमं तु तदंशोन मधमं बेरमुच्यते २९२

स्वरूपं वाऽथ कर्तव्यं विरूपां वा यदृच्छया
अथवा बाहुसीमान्तं स्तनान्तं नाभिकान्तकम् २९३

श्रेष्ठमध्यकणिष्ठं स्यात् कुब्जवामनकं त्यजेत्
धामगर्भगृहस्तम्भद्वारकर्तृवशादिह २९४

लम्बोच्चमानं मात्रैस्तु बुद्धिमान् भाजयेत् समम्
परिहृत्याङ्गुलच्छेदं वृद्ध्या हान्या विचक्षणः २९५

आयव्ययर्क्षवाराष्टयोन्यंशकशुभं नयेत्
आयव्ययो मतौ ऋग्भिर्धनर्णौ च यथाक्रमम् २९६

बेरायामं गृहीत्वाष्टनवभिस्त्रिगुणैर्हृते
द्वादशाष्टाष्टभिर्व्यासधनर्णाख्यं तु योनिकम् २९७

आयाधिकं व्ययक्षीणं मानं तत्सम्पदां पदम्
योनिष्वष्टासु स्युः अशकूपरम्भविधिं २९८

सार्धस्तम्भोदयं श्रेष्ठं बेरायाममिति स्मृतम्
स्तम्भोच्चं वाऽथ नन्दाष्टभागोनं तद्द्विधा मतम् २९९

तथैव बेरमानं तु विविधं समुदीरितम्
त्रिपञ्चरत्निभिः पङ्क्तिहस्तैः पञ्चकरैरपि ३००

श्रेष्ठमध्यकनिष्ठं च त्रिविधं प्रतिमोदयम्
प्रासादहस्तमानाभ्यां क्षुद्रेऽक्षुद्रे गृहे क्रमात् ३०१

एकत्रिंशाङ्गुलादुर्ध्वं षडङ्गुलविवर्धनात्
सप्ताङ्गुलाधिकं नन्दहस्तान्तप्रतिमोदयम् ३०२

पञ्चरत्नविमानाद्या द्वादशान्तं यथाक्रमम्
त्रयस्त्रिंशत्समुत्सेधं मानज्ञैः समुदीरितम्  ३०३

सप्तषट्पञ्चभागे तु मूलबेरायतेंऽशतः
चतुस्त्रिद्व्यंशके वाऽपि भागेनैवायतं मतम्  ३०४

जङ्गमप्रतिमानां तु विशेषेण मुनीश्वरैः
पूजाभागसमं हीनं सार्धं वा मध्यमे भवेत्  ३०५

द्विगुणं तु तदुत्सेधं जङ्गमे लिङ्गमानतः
पूजाभागोदयार्धं वा त्रिभागं तत्समोदयम्  ३०६

जङ्गमप्रतिमोत्सेधं लिङ्गमानवशाद् द्विधा
त्रयोदशाङ्गुलोच्चादि द्विद्व्यङ्गुलविवर्धनात्  ३०७

एकत्रिंशतिमात्रं तु दशधा जङ्गमोदयम्
त्रित्रिपञ्चाङ्गुलाद्यन्तं यत्तद्बेरं गृहे नृणाम्  ३०८

अर्धार्धाङ्गुल
यजमानाङ्गुलं वाऽपि गृह्णीयाद्यत्तदिष्टतः  ३०९

क्षुद्राणां तु यवैर्वापि विप्रयोज्यमिदं तु वा  ३०९-२

नन्दी कालः पूर्वतो दक्षिणे स्याद्दण्डी मुण्डी वैजयो भृङ्गिरीटी
प्रत्यग्गोपानन्तकावुत्तरस्यां न्यस्तव्याः स्युर्दक्षिणादिक्रमेण  ३१०

श्याम कुङ्कुमनिभेन्द्रकेन्द्रगोऽपोपमं सितमयूरकन्धरम्
पद्मनीलनिभकालसन्निभं द्वारपालवरवर्णमुच्यते  ३११

दण्डं टङ्कं च खड्गं निशितशिखियुतं भिण्डिपालं च वेलं
शूलं वज्रं च शक्तिं स्फुरितशिखियुतं बिभ्रतोऽन्योन्यमेवम्

हस्तैर्युक्ताश्चतुर्भिस्त्रिभिरपि नयनैर्लोचनाभयामथो वा
संयुक्ताश्चोग्रदंष्ट्रा मकुटतटलसच्छूलनागाङ्किताङ्गाः ३१२

यत् सूच्यं चार्धचन्द्रं ह्यलकमलयुतं हस्तकं बिभ्रतस्ते
देहे देहेऽष्टमांशावधिकपरियुताः शान्तटङ्कावृता वा
देवानामेव नित्याभयभयकरवक्त्राः प्रचण्डस्वरूपाः
नानाकृत्योपयुक्ताः शशिधरभवने सालकाः शूलहस्ताः ३१३

सर्वेषां नवतालमानमुदितं तत्तालमानक्रमं
दिष्टव्यं हरदिष्टशास्त्रविषये विद्वज्जनैः शिल्पिभिः
सर्वे कुञ्चितपादकाश्च भवने दौवारिकाः शालिनः
ते सर्वे हरिणोज्ज्वलाः फणिगणैरुष्या यथेष्टाम्बराः ३१४

आकारवर्णवरभूषणवाहनानां स्थानध्वजायुधनिजासनमार्गमेवम्
ब्रह्माहरीश्वरकुमारमुखामराणां प्रोक्तं हि विश्वमखिलागमलोकनानाम्
३१५

इति मयमते वस्तुशास्त्रे प्रतिमालक्षणं नाम षट्त्रिंशोऽध्यायः

इति मयमतं समाप्तम्

## अथ कूपारम्भः

नैर्ऋत्यां व्याधिपीडा स्याद् वारुण्यां पशुवर्धनम्
वायव्ये शत्रुनाशः स्यात् सौम्ये सर्वसुखप्रदम् १

ईशाने पुष्टिलाभः स्याद् ग्रामादौ कूप उच्यते २

चन्द्रगुप्तश्चाह--
रुद्रे वारुणादिक्षु च क्षेत्रारामेषु शस्यते कूपः ३

वराहमिहिरश्चाह--
आग्नेये यदि कोणे ग्रामस्य पुरस्य वा भवेत् कूपः
नित्यं स करोति भयं नाशं च समानुषं प्रायः ४

नैर्ऋतिकोणे कूपो धनक्षयं स्त्रीक्षयं च वायव्ये
दिक्त्रयमेतत्त्यक्त्वा शेषासु शुभावहः कूपः ५

तिथिविधिमाह नृसिंहः--
चित्रादर्शास्तथा रिक्ता वर्ज्याः शेषाः शुभावहाः
शकुनादिनिविष्टं च विशेषेण विवर्जयेत् ६

शुक्रज्ञजीवचन्द्राणां वाऽथ वर्गोदयाः शुभाः ७

नक्षत्रविधिमाह--
मूलाग्नेय मघाश्लेषा विशाखा भरणी तथा
अधोमुखास्त्रिपूर्वाख्याः कूपादिखनने शुभाः ८

रोहिण्यार्द्रा श्रविष्ठा च पुष्यवारुणवैष्णवाः
ऊर्ध्वाननाः प्रशस्ताः स्युरुत्तरत्रयमेव च ९

प्रशस्तानि तुलादीनि वृद्धिकार्यादिषु क्रमात्

वाजिभाच्चित्रभान्मूलात् पञ्चर्क्षन्तु विवृद्धिदम्  १०

सेतुकुल्यादिकार्येषु प्रशस्तमिति केचन
आप्यानिलाग्निवरुणचतुष्कं चावरोहणम्  ११

वापीकूपतटाकादिखनने शुभदं भवेत्  १२

चन्द्रगुप्तः--
हस्तोत्तरा धनिष्ठा पित्र्यं वरुणेन्द्रमैत्ररोहिण्यः
हरिमूलसार्पिचित्राः तिष्यं खनने प्रशस्ताः स्युः  १३

अथ कूपारम्भविधिरुच्यते--
पुष्टिं भूतिं पुत्रहानिं पुरन्ध्रीनाशं मृत्युं संपदं शस्त्रबाधाम्
किञ्चित्सौख्यं दीक्ष शर्वादि कुर्यात् कूपो मध्ये गेहमर्त्यक्षयं च  १४

तथाह देवरातः--
मध्यमे द्रव्यनाशं स्यादैन्द्रे सुखकरं भवेत्
आग्नेय्यां पुत्रमरणं याम्ये सर्वविनाशनम्  १५

इति परिशिष्टं समाप्तम्